# प्रमुखांशाः

सम्पुट - १८ अगस्त - २००१ सञ्चिका - ५



भारत-गौरव-गाथा २९



गणपतिदेव पाहि नः २४



पण्डितस्य अभिज्ञानम् १९



महाज्योतिषिकः कश्चन... ३८



## अन्तरङ्गम्



**ग्राहकशुल्कम् -**
अमेरिका-केनडादेशयोः कृते
प्रतिकृतिमूल्यम् - $२
वार्षिकं शुल्कं - $२०
भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -
Subscription Division
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony,
Ekkatuthangal, CHENNAI - 600 097
E.mail : subscription@chandamama.org

**उपायनीक्रियताम्**
वायुयानेन भारतेतरदेशान् प्रति
वार्षिकं (१२ सञ्चिकाः) - रू.९००/-
भारते रू. १२०/- (बुक्पोस्ट् द्वारा)
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा 'Chandamama India Limited' नाम्ना प्रेषणीयम् ।

We had, on behalf of our readers who expressed anxiety, written to the Prime Minister, Shri Vajpayee, wishing him speedy recovery from his recent surgery. His response printed on this page is full of appreciation of and encouragement to the task undertaken by *Chandamama* to provide insights into India's heritage. As we express our gratitude to him, and share the message with our readers, we rededicate ourselves to the objectives of the founders to promote national integration through this multi-lingual magazine. **-Editor**



प्रधान मंत्री
Prime Minister

New Delhi
June 23, 2001

Dear Shri Reddi,

Thank you for your kind letter dated June 16, 2001 conveying the good wishes of the readers of *Chandamama* for my speedy recovery after the recent knee surgery. I appreciate their warm and affectionate sentiments and reciprocate the same.

I am delighted to know that *Chandamama*, which has mesmerized millions of students with stories drawn from India's rich cultural heritage has successfully re-launched itself in twelve language editions. What has especially gladdened me is that you have also started to publish a Sanskrit edition of the magazine to popularize this ancient but ever-living language, which is the basic source of our culture and philosophical heritage.

I admire your courage and commitment since this must be a difficult task for you. However, knowing that you have the benefit of the collaboration of Sanskrit Bharati in New Delhi, which has been doing commendable work in taking Sanskrit to the masses, I am sure your effort will bear fruits.

The task of providing greater patronage and promotion to Sanskrit has to be shared by the Government as well as non-governmental agencies, especially, the mass media. *Chandamama's* bold effort, therefore, deserves our highest appreciation.

With best wishes,

Yours sincerely,

(A.B. Vajpayee)



*संस्थापकौ -*

चक्रपाणिः नागिरेड्डी च

# विनूतनम् आनुकूल्यम्

स्वातन्त्र्यसङ्ग्रामकाले या नवजागृतिः देशे दृश्यते स्म तत्काले 'नूतनेन प्रक्रमेण राष्ट्रैक्यं साधनीयम्' इति चिन्तितं चन्दमामसंस्थापकैः ।

'भारतस्य अभिमानास्पदेतिहासः, श्रेष्ठा परम्परा इत्यादयः राज्ञां, मुनीनां, महात्मनाम्, उदारचरितानां च दृष्टान्तैः ज्ञापनीयाः, मानवीयमौल्यानां जागरणं करणीयम्' इति तैः चिन्तितम् । अतः ते उत्तमाः कथाः चित्वा रमणीयानि चित्राणि संयोज्य प्रकाशनम् आरब्धवन्तः, येन वाचकानां मतस्सु उदात्ताः विचाराः अङ्कुरिताः पोषिताः च स्युः, येन च ते समाजस्य योग्याः सदस्याः भवेयुः ।

संस्थापकैः एतया दृष्ट्या अपरः प्रयासः अपि कृतः । वाचकाः यां भाषां सम्यक् जानन्ति तया एव भाषया तैः पत्रिका प्रकाशिता । एतेन कथायाः रसस्य आस्वादने, सन्देशस्य अवगमने च सामान्याः अपि जनाः समर्थाः जाताः । एवं चन्दमामायाः विविधभाषीयाः आवृत्तयः आरब्धाः ।

असङ्ख्यजनानाम् आवश्यकतायाः पूरणार्थं आरब्धस्य एतस्य प्रयत्नस्य निर्वहणं सुलभसाध्यं न आसीत् । अतः चक्रक्रमेण अनुवादपद्धत्या पत्रिकावृत्तीनां प्रकाशनस्य परम्परा आरब्धा । एतस्याः परिमितिः नाम माससम्बद्धादयः केचन विषयाः कासुचित् आवृत्तिषु प्रकाश्यन्ते स्म, पुनः कासुचित् न ।

एतां समस्यां निवारयितुम् अगस्त्मासतः नूतनः क्रमः अनुसरिष्यते । चन्दमामायाः अर्धभागः इतःपरं सर्वासु भाषासु समानः भविष्यति । एतस्य लाभः अयं यत् ये भाषाभ्यासिनः सन्ति ते संस्कृतचन्दमामया सह अन्यभाषीयचन्दमामाम् अपि क्रीत्वा पठन्तः संस्कृतं प्रत्यक्षरम् अवगन्तुम् अर्हन्ति ।

प्रतिसञ्चिकं विशेषः - चन्दमामायाः वैशिष्ट्यम् । भवताम् अभिप्रायाणां सदा स्वागतम् ।

---

*सम्पादकः - विश्वम्*



# वरपरीक्षा

मालवदेशं राजा मानसिंहः पालयति स्म। तस्य पुत्री चन्द्रिका । सा परमसुन्दरी । तां महत्या प्रीत्या पालितवान् आसीत् राजा ।

पाण्डित्ये विशेषादरः तस्य । मम पुत्री पाण्डित्येन असदृशी स्यात् इति तस्य अपेक्षा । अतः पुत्र्याः अध्यापनार्थं योग्यान् पण्डितान् नियोजितवान् आसीत् सः ।

कालः अतीतः । चन्द्रिका विवाहयोग्या जाता । पुत्र्याः विवाहविषये राजा मन्त्रिभिः सह समालोचनं कृतवान् । विविधदेशानां राजकुमाराणां चित्राणि तेन दूतद्वारा आनायितानि ।

तानि चित्राणि दृष्ट्वा चन्द्रिका उक्तवती – ''तात ! चित्राणां दर्शनमात्रेण कस्यापि पाण्डित्यं न अवगम्यते खलु ? यः मत्तः अपि न्यूनबुद्धिमान् भवेत् तम् अहं कथं परिणयेयम् ? यदि भवतः सम्मतिः स्यात् तर्हि अहं राजकुमाराणां परीक्षां कर्तुम् इच्छामि । यः तत्र उत्तीर्णः भविष्यति तम् एव परिणेष्यामि च'' इति ।

राजा मन्त्रिभिः समालोच्य चन्द्रिकायाः अपेक्षायाः पूरणे सहमतिं दर्शितवान् ।

*प्रातः द्यूतप्रसङ्गेन*
*मध्याह्ने स्त्रीप्रसङ्गतः ।*
*रात्रौ चोरप्रसङ्गेन*
*कालो गच्छति धीमताम् ।।*

इत्येतं श्लोकं लिखित्वा तत् पत्रं राज्ञे दत्तवती चन्द्रिका ।

राजा सुवर्णाक्षरैः शिलाफलके तं श्लोकं लेखितवान् । ततः सः उद्घोषितवान् यत् यः एतस्य श्लोकस्य अर्थं योग्येन क्रमेण विवृणोति तस्मै राजकुमारी दीयते इति ।

चन्द्रिकायाः स्वयंवरवार्ता सर्वत्र प्रसारिता । एतां श्रुत्वा बहवः राजकुमाराः मालवदेशम् आगताः । ते श्लोकं पठित्वा

*'भामहः'*

अर्थम् उक्तवन्तः - ''प्रातः द्यूतसम्बद्ध-वार्तालापेन, मध्याह्ने स्त्रीसम्बद्धवार्तालापेन, सायं चोरसम्बद्धवार्तालापेन च बुद्धिमन्तः कालं यापयन्ति'' इति ।

'श्लोकस्य तात्पर्यम् एतत् न' इति उक्त्वा राजकुमारी तान् सर्वान् प्रतिप्रेषितवती । स्वयंवरे कोऽपि उत्तीर्णः न जातः ।

एतस्मात् प्रसङ्गात् राजा राज्ञी च नितरां खिन्नौ । 'पुत्र्याः चिन्तनम् अनुमतवतोः आवयोः निर्णयः अनुचितः जातः किम् ?' इति तौ चिन्तितवन्तौ ।

जयसिंहनामकः कश्चन तरुणः अपि स्वयंवरवार्तां श्रुतवान् । सः बुद्धिमान् सुन्दरः च आसीत् । सेनापतेः पुत्रः सः । 'स्वयंवरदिने कोऽपि राजकुमारः न वृतः राजकुमार्या । तया आयोजितायां बुद्धिमत्ता-परीक्षायां कोऽपि उत्तीर्णः न जातः । एवं स्थिते मया मम भाग्यपरीक्षा कुतो वा न करणीया ?' इति चिन्तयन् सः राजसमीपं गत्वा - ''अहं श्लोकस्य तात्पर्यं वदिष्यामि । तदर्थम् अनुज्ञा दातव्या कृपया'' इति प्रार्थितवान् ।

यद्यपि राजा राजकुलोत्पन्नाय एव स्वपुत्रीं दातुम् इच्छति स्म, तथापि अर्हः राजकुमारः न प्राप्तः इत्यतः सः जयसिंहाय श्लोक-तात्पर्यविवरणार्थम् अनुज्ञां दत्तवान् ।

तदा जयसिंहः उक्तवान् - ''बुद्धिमतां समयः कथं यापितः भवति इति अस्मिन् श्लोके निरूपितम् अस्ति । महाभारते द्यूतसम्बद्धा कथा अस्ति । रामायणे च स्त्रीसम्बद्धव्यवहाराः निरूपिताः सन्ति । कैकेय्याः वरप्रार्थना, सीतायाः अपहरणम् इत्यादयः एव तत्र प्रमुखाः । कृष्णस्य कथा चोरसम्बन्धिनी । 'चोरजारशिखामणे' इति कृष्णः स्तूयते कविभिः । अतः पण्डिताः प्रातः महाभारतं, मध्याह्ने रामायणं, सायं भागवतं च पठन्तः स्वस्य समयं यापयन्ति इति एतस्य श्लोकस्य तात्पर्यम्'' इति ।

एतत् विवरणं श्रुत्वा सन्तुष्टा चन्द्रिका जयसिंहस्य कण्ठे वरणमालाम् अर्पितवती । ततः तयोः विवाहः महता वैभवेन सम्पन्नः ।



# बुद्धिमत्तायाः वृद्धिः

नारङ्गपुरस्य धर्मशालां प्रति कदाचित् गोपाल-सुशीलनामकौ यात्रिकौ आगतौ । तयोः आगमन-समये अन्धकारः प्रसृतः आसीत् । भोजनानन्तरं उभौ अपि शयनार्थम् उद्युक्तौ । तत्समये गोपालः स्यूततः किमपि चूर्णं निष्कास्य मुखे स्थापितवान् ।

एतत् दृष्ट्वा – 'प्रायः एषः ताम्बूलचर्वणं करोति इति भाति' इति विचिन्त्य सुशीलः – ''किं तत् ?'' इति अपृच्छत् ।

तदा गोपालः अवदत् – ''एतानि कपित्थबीजानि । मम गृहे एकः ताडग्रन्थः अस्ति । तत्र लिखितम् अस्ति यत् एतेषां बीजानां सेवनतः बुद्धिः तीक्ष्णा भविष्यति इति । अतः एतानि खादन् अस्मि'' इति ।

''तर्हि मह्यम् अपि कानिचन ददातु तावत् । अहं तीर्थयात्रार्थं प्रस्थितः अस्मि । यदि मम बुद्धिः तीक्ष्णा स्यात् तर्हि अहं प्रयाणे केनापि वञ्चितः न भवेयम्'' इति अवदत् सुशीलः ।

''निश्शुल्कं तु न दीयते । चत्वारि रूप्यकाणि ददातु । चत्वारि बीजानि ददामि'' इति अवदत् गोपालः ।

ततः सुशीलः चत्वारि रूप्यकाणि दत्त्वा चत्वारि बीजानि प्राप्य एकं मुखे स्थापितवान् । तावता तस्य मनसि विचारः आगतः – 'अयं मां वञ्चितवान्' इति । अतः सः कोपेन गोपालं पश्यन् अवदत् – ''किं भोः, मां वञ्चितवान् खलु भवान् । चतुर्भिः रूप्यकैः अनेकानि कपित्थफलानि एव क्रेतुं शक्यानि । वञ्चकं भवन्तं न्यायाधीशाधीनं करिष्यामि । यथायोग्यं दण्डयिष्यामि'' इति ।

तदा गोपालः हसन् अवदत् – ' सिद्धं खलु मया दत्तस्य बीजस्य बुद्धिमत्तावर्धनसामर्थ्यम् ! पश्यतु, मुखे एकस्य स्थापनात् एव एतावती बुद्धिमत्ता प्राप्ता भवता'' इति ।

एतत् श्रुत्वा सुशीलः तत् वचनं सत्यं भावयन् 'अहं बुद्धिमान् जातः' इति चिन्तयन् मौनम् आश्रितवान् ।





# यक्षपर्वतः

## ६

*[पर्वतप्रदेशे खड्गवर्मजीवदत्ताभ्याम् आक्रामकगणः स्वर्णाचार्यः च दृष्टः । स्वर्णाचार्यस्य निमन्त्रणस्य अनुगुणं तौ पर्वतस्य ऊर्ध्वभागं प्राप्तवन्तौ । तदवसरे कश्चन आक्रामकः धावन् आगत्य अवदत् यत् मृगयार्थं गतम् अस्मन्नायकं समरबाहुं नरभक्षकाः आरण्यकाः गृहीत्वा नीतवन्तः इति । तदनन्तरम्...]*

तस्य भटस्य वचनं श्रुत्वा खड्गवर्मा जीवदत्तः च आश्चर्यचकितौ जातौ । आ बहोः कालतः तौ अरण्ये वसतः । तथापि नरभक्षकाः न दृष्टाः आसन् ताभ्याम् । अतः जीवदत्तः तं भटम् उक्तवान् - ''भवतः नायकं ते नरभक्षकाः पक्त्वा खादन्ति, उत अपक्त्वा इति तु अनन्तरं चिन्तयाम । आदौ एतत् वदतु - एषा घटना कुत्र प्रवृत्ता इति । कथम् एतत् प्रवृत्तम् ?'' इति ।

''श्रीमन् ! मृगयार्थं गताः वयम् एकं हरिणं मारयित्वा तं स्कन्धे आरोप्य प्रत्यागच्छन्तः आस्म । तदवसरे एकः व्याघ्रः अगर्जत् । कस्यचित् मनुष्यस्य चीत्कारः अपि श्रुतः । वयं ध्वनिम् अनुसृत्य धावितवन्तः । तत्र व्याघ्रस्य पादसमीपे मृतः कश्चन अरण्यवासी दृष्टः । व्याघ्रस्य उरसि शूलायुधं लग्नं दृश्यते स्म । तस्य पार्श्वे कश्चन व्याघ्रशिशुः हताशतया इतस्ततः अटति स्म ।''

''ततः किं प्रवृत्तम् ?'' - जीवदत्तः अपृच्छत् ।

''अस्माकं नायकः तस्य व्याघ्रस्य शिशुं पालयितुम् इष्टवान् । अतः अहं कष्टेन तं शिशुं गृहीतवान् । तदवसरे दशपञ्चदश



जनाः वृक्षाणां मध्यतः आगत्य आक्रमणं कृतवन्तः । ते भल्लूकचर्म धृतवन्तः आसन् । ते अस्मान् गृहीतवन्तः । तेषां नायकस्य मुखं भल्लूकचर्मणा आवृतम् आसीत् । अतः तस्य मुखलक्षणादिकम् अभिज्ञातुं न शक्यते स्म । ते अस्मन्नायकस्य अन्यस्य च हस्तौ पृष्ठतः बद्ध्वा आदिष्टवन्तौ यत् विना विरोधम् अनुस्त्रियताम् इति । सौभाग्यात् ते मम बन्धनं न कृतवन्तौ । 'भवान् व्याघ्र-शिशुम् उन्नीय अस्मान् अनुसरतु' इति आदिष्टवन्तः ते । अहम् अङ्गीकृतवान् । किन्तु अल्पे एव काले आत्मनि धैर्यं प्रपूर्य अहं व्याघ्रशिशुं भल्लूकचर्मधारिणां नायकस्य उपरि क्षिप्तवान् । व्याघ्रशिशुः आत्मरक्षणार्थं तस्य कण्ठं दृढतया अगृह्णात् । यावत् सः भल्लूकचर्मधारि-नायकः व्याघ्रशिशुग्रहणात् मुक्तिं प्राप्तुं प्रयतमानः आसीत् तावता अहं विना शब्दं ततः पलायनं कृतवान्'' इति ।

अत्रान्तरे कश्चन भटः उन्नतां शिलाम् आरुह्य अरण्यप्रदेशे सर्वत्र दृष्टिं प्रसार्य सर्वं परिशील्य जीवदत्तखड्गवर्मणोः समीपम् आगत्य अवदत् - ''श्रीमन् ! एतस्य पर्वतस्य मूलभागे वनवासिनः वाद्यं वादयन्तः गायन्तः नृत्यन्तः गच्छन्तः सन्ति । तेषाम् अग्रभागे अस्माकं नायकः, भटः च स्तः । तयोः हस्तौ बद्धौ स्तः'' इति ।

''एवम् !'' इति उक्त्वा स्वर्णाचार्यः पर्वतमूलभागं परिशील्य खड्गवर्मजीवदत्तौ विनयेन अवदत् - ''आर्यौ ! भवद्भ्यां कथमपि सः समरबाहुः रक्षणीयः'' इति ।

''स्वर्णाचार्यवर्य ! अवश्यम् आवां तं रक्षिष्यावः । भवतः एषा सविनयप्रार्थना कथं वा तिरस्कारार्हा भवेत् ?'' इति उक्तवान् जीवदत्तः ।

एतदनन्तरं खड्गवर्मा जीवदत्तः च पर्वतम् अवतीर्य अरण्यं प्रविष्टवन्तौ । किञ्चिद्दूरं यदा गतं तदा वाद्यवादनध्वनिः दूरात् एव श्रुतः । क्षणकालानन्तरं सः अकस्मात् स्थगितः । अतः समग्रम् अरण्यं शान्तं जातम् ।

द्वित्रक्षणानाम् अनन्तरं ताभ्यां वृक्षसमूहात् वृकानां ध्वनिः श्रुतः । तं श्रुत्वा जीवदत्तः अवदत् - ''आश्चर्यकरम् एतत् । यदा मानवाः सञ्चरन्तः भवन्ति तदा कथम् एषः वृकानां ध्वनिः ?'' इति । एतावत् उक्त्वा सः वृक्षशाखानां मध्ये दृष्टिं प्रसारितवान् ।

खड्गवर्मा अपि तम् एव अनुकृतवान् ।

ततः ताभ्यां सुदूरे समृद्धः कश्चन भूप्रदेशः लक्षितः । तत्र विविधाः शाकाः वर्ध्यमानाः दृष्टाः । फलपूर्णाः वृक्षाः अपि दृष्टाः । अतिसुन्दरं दृश्यं तत् । चत्वारः पुरुषाः सस्यानि जलेन सिञ्चन्तः दृष्टाः । भल्लूकचर्मधारिणौ उभौ वृक्षच्छायायाम् उपविष्टौ आस्ताम् । तयोः पार्श्वे उभौ वृकौ दीर्घजिह्वां प्रसार्य उपविष्टौ आस्ताम् ।

अग्रे किं करणीयम् इति जीवदत्तः खड्गवर्मा च क्षणकालं चिन्तितवन्तौ । तावता कश्चन भल्लूकचर्मधारी उत्थाय जलसेचन-निरतान् उद्दिश्य - ''भो भो दासाः, शीघ्र-तया कार्यं कुर्वन्तु'' इति आदिश्य पुनरपि वृक्षच्छायाप्रदेशं प्राप्य सुखेन उपविष्टवान् । अपरः भल्लूकचर्मधारी जृम्भणं कुर्वन् प्राप्तां निद्रां कष्टेन निवारयन् आसीत् ।

''अहो, कीदृशी रक्षणपरिपाटी एतयोः'' इति वदन् खड्गवर्मा यावत् सर्वत्र परिशीलयन् आसीत् तावता शाकानां सस्यानि जलेन सिञ्चन् स्थितः कश्चन दासः मन्दगत्या सस्यानां मध्ये सञ्चरन् तस्य वृक्षस्य समीपं गतवान्, यस्य च अधः रक्षकः भल्लूकचर्मधारी उपविष्टः आसीत् ।

अयं किं कर्तुम् उद्युक्तः इति न ज्ञातं खड्गवर्मजीवदत्ताभ्याम् । सः दासः अवनम्य एकं शिलाखण्डम् उन्नीय रक्षकस्य शिरः लक्ष्यीकृत्य क्षिप्तवान् । शिलाखण्डप्रहारं प्राप्य रक्षकः वेदनाम् अनुभवन् अधोमुखतया अपतत् । दासश्च ततः पलायनं कृतवान् ।



''जीवदत्त ! इदानीम् आवाभ्यां किं करणीयम् ? किं धावन्तं दासम् अनुसराव, उत समरबाहोः अन्वेषणं करवाव ? तं दासम् अनुसृत्य वृकाः गताः सन्ति । ते तं गृह्णीयुः अपि । अतः वयं समरबाहोः एव अन्वेषणं करवाव'' इति उक्तवान् खड्गवर्मा ।

ततः तौ अरण्यमार्गेण अग्रे गतवन्तौ । वृकानां रवम् अनुसरतः स्म तौ । किञ्चिद्दूरं यदा गतं तदा ढक्कातूर्यादीनां ध्वनिः ताभ्यां श्रुतः । तौ परिवृत्य तस्य शब्दस्य दिशि दृष्टिं प्रसारितवन्तौ । दूरे वृक्षाणां मध्ये कृष्ण-धूमस्य निर्गमः ताभ्यां लक्षितः ।

''समरबाहोः तदनुचरस्य च खादनस्य प्रयत्नः तु प्रचलन् न स्यात् खलु ?'' इति सन्देहेन पृष्टवान् जीवदत्तः ।

''स्यात्, न स्यादपि । प्रत्यक्षम् अदृष्ट्वा



वस्तुस्थितिं कथं वा ज्ञातुं शक्नुयाम ? आगच्छतु, अग्रे गत्वा परिशीलयाम'' इति वदन् खड्गवर्मा वेगेन ततः प्रस्थितवान् ।

धावन्तौ तौ तं ध्वनिमूलप्रदेशं प्राप्तवन्तौ । उन्नतं कञ्चित् वृक्षम् आरुह्य भल्लूकचर्मधारिणां व्यवहारं परिशीलयितुम् उद्युक्तौ जातौ ।

यत्र धूमः निर्गच्छति तस्य पार्श्वे एका गुहा आसीत् । अरण्ये मृगयया प्राप्तान् सर्वान् जीविनः दग्ध्वा तत्र पचन्ति स्म । केचन ढक्कां वादयन्तः भल्लूकान् नर्तयन्तः मनोरञ्जनस्य उत्पादने निरताः आसन् ।

''जीवदत्त ! या गुहा दृश्यते सा एव एतेषां निवासस्थानम् इति भाति । अन्तः सर्वविधवासव्यवस्था समीचीनतया स्यात् तत्र । एतैः समरबाहुः एतावता अपि न मारितः स्यात् इति भाति मम'' इति उक्तवान् खड्गवर्मा ।

एवं तौ परस्परवार्तालापे यदा निरतौ आस्तां तदा कश्चन भल्लूकचर्मधारिभटः समरबाहुं, तदनुयायिनं च गुरोः पुरतः उपस्थाप्य अवदत् - ''भल्लूकगुरुवर्य ! एतौ अरण्ये प्राप्तौ मया । एतौ स्वभावेन साहसिनौ । अतः एतयोः ग्रहणे महान् श्रमः करणीयः अभवत् मया'' इति ।

भल्लूकगुरुः सभाभवनसदृशे समतलस्थले शिलाभिः रचिते उन्नतासने उपविष्टः आसीत् । तदीयं मुखम् अपि भल्लूकमुखचर्मणा आवृतम् आसीत् । तस्य पुरतः उभौ भीकरौ वृकौ मुखम् उद्घाट्य स्थितौ आस्ताम् ।

भल्लूकचर्मधारिभटस्य कथनं श्रुत्वा भल्लूकगुरुः समरबाहुं पश्यन् उच्चस्वरेण अपृच्छत् - ''अये, भवतः वेषभूषादीनां दर्शनात् ज्ञायते यत् भवान् नगरवासी इति । अत्र कथम् आगतं भवता ?'' इति ।

समरबाहुः अवदत् - ''सिन्धुदेशीयात् मरुस्थलात् अहम् आगतः । सहस्राधिकाः अनुचराः सन्ति मम । एतत् गुहागृहं, भवन्तं च क्षणमात्रेण नाशयितुं समर्थाः ते'' इति ।

''पौरुषाद्योतकानि भवतः वचनानि श्रवणरमणीयानि सन्ति । किन्तु एतत् स्मरतु यत् एतत् गुहागृहं न, अपि तु गुहादुर्गम् इति । भवतः अनुचराः यावत् एतत् स्थलं प्राप्नुयुः ततः पूर्वम् एव मम अनुचराः भल्लूकभटाः, मया पालिताः वृकाः च तान् संहरिष्यन्ति । मम पुरतः आत्मप्रशंसा

मास्तु। भवन्तं भवदनुचरान् च दासान् विधाय कृषिकार्ये नियोजयिष्यामि । दासानां भवतां नास्ति विशेषाधिकारः'' इति उक्तवान् भल्लूकगुरुः ।

अत्रान्तरे द्वौ भल्लूकभटौ धावन्तौ तत्र आगतवन्तौ । समरबाहोः उपस्थितिं दृष्ट्वा मौनेन स्थितवन्तौ च । तदा भल्लूकगुरुः अपृच्छत् - ''किमर्थं मौनेन स्थितम् ? उच्यताम् । अस्मद्दासौ एतौ भवद्भ्याम् उच्यमानं श्रुत्वा अपि न किमपि कर्तुं शक्नुतः । अलं भयेन । एतौ इदानीम् एव वृकस्थलं प्रति प्रेषयिष्येते मया'' इति ।

''गुरुवर्य ! रहस्यं किञ्चित् निवेदनीयम् अस्ति'' इति वदन्तौ तौ भल्लूकगुरोः समीपम् आगत्य कर्णे किमपि उक्तवन्तौ ।

अनन्तरक्षणे भल्लूकगुरुः समरबाहुं बन्दीकृत्य आनीतवन्तं भल्लूकभटम् असन्तोषेण पश्यन् - ''भवतः विवेकः सर्वथा नष्टः इति भाति । अस्तु तावत्, एतौ वृकस्थलं नीत्वा तत्रैव त्यजतु । एतयोः हस्तयोः बन्धनार्थम् उपयुक्तां रज्जुम् अपनयतु'' इति अवदत् ।

भल्लूकगुरोः आज्ञां शिरसा वहन् भल्लूकभटः तौ ततः नीतवान् । तयोः निर्गमनस्य अनन्तरं भल्लूकगुरुः अनुचरान् उक्तवान् - ''तौ नूतनौ अस्माकं दुर्गस्य पूर्णं विवरणम् एतावता ज्ञातवन्तौ स्याताम् इति अहं भावयामि । तौ सजीवं ग्रहीतव्यौ शीघ्रातिशीघ्रम्'' इति ।

''यथाज्ञापयति गुरुदेवः'' इति वदन्तः दशपञ्चदश भटाः ततः निर्गतवन्तः ।



वृक्षात् अवतरन् जीवदत्तः खड्गवर्माणम् अवदत् - ''यत् द्रष्टव्यम् आसीत् तत् दृष्टम् आवाभ्याम् । मम तु महती बुभुक्षा । अतः अत्रैव कुत्रापि नद्यां कासारे वा स्नात्वा फलानि खादाव । अन्धकारप्रसारस्य अनन्तरं गुहाप्रवेशोपायं चिन्तयाव'' इति ।

खड्गवर्मा प्रत्युत्तरं किमपि अवदन् वृक्षात् अवतीर्णः । ततः तौ कासारस्य कस्यचित् समीपं गतौ । कासारं परितः गुल्माः महावृक्षाः च आसन् । सूक्ष्मावलोकनात् ज्ञातं यत् बहवः वन्यपशवः जलपानार्थम् अत्र आगच्छन्ति इति ।

''खड्गवर्मन् ! शीघ्रं स्नात्वा इतः निर्गमनम् एव वरम् इति भाति मम । यतः वन्यपशवः इव भल्लूकचर्मधारिणः अपि एतस्य कासारस्य उपयोगं कुर्वन्तः स्युः''



इति उक्तवान् जीवदत्तः ।

यावत् जीवदत्तः एवं वदन् आसीत् तावता समीपस्थगुल्मतः वन्यकुक्कुटाः शब्दं कुर्वन्तः निर्गताः । ''वन्यकुक्कुटानां मांसम् अनास्वादितवतः मम बहूनि दिनानि अतीतानि'' इति वदन् खड्गवर्मा तान् उद्दिश्य बाणं प्रयुक्तवान् ।

दौर्भाग्यवशात् बाणः तेषु कस्मिंश्चित् अपि न लग्नः । ते उड्डीय निर्गताः । अनन्तरक्षणे एव कस्यचित् मानवस्य चीत्कारध्वनिः श्रुतः - ''गुरुवर्य ! एषोऽहं मृतः'' इति ।

तं चीत्कारं श्रुत्वा तौ क्षणकालं स्तब्धौ । ततः तौ तां दिशम् अनुसृतवन्तौ, यत्र चीत्कारः श्रुतः । तत्र भल्लूकचर्मधारी कश्चन सैनिकः रक्तप्रवाहे निमग्नः दृश्यते स्म ।

जीवदत्तः तम् अपृच्छत् - ''अये, दर्शनात् एव भासते यत् भवान् कः इति । आवां बुद्ध्या भवन्तं न मारितवन्तौ । अत्र गुल्मप्रदेशे किं क्रियते स्म भवता ?'' इति ।

सः भल्लूकचर्मधारी उत्तरकथनस्थितौ न आसीत् । सः इतस्ततः लुण्ठन् - ''भल्लूकगुरो गुरुवर्य !'' इति पुनः पुनः वदति स्म ।

''जीवदत्त ! एषः कुक्कुटानां ग्रहणार्थम् एतं गुल्मं प्रविष्टवान् स्यात्, उत गुप्तचरकार्यार्थम् ?'' इति अपृच्छत् खड्गवर्मा ।

''एतस्य उत्तरं तु एषः एव दातुं शक्नुयात् । किन्तु एतदीयाः प्राणाः एतावता एव पराशक्तौ लीनाः सन्ति'' इति अवदत् जीवदत्तः ।

ततः तौ कासारे स्नातवन्तौ । समीपस्थेभ्यः वृक्षेभ्यः फलानि अवचित्य खादितवन्तौ । सूर्यास्तं यावत् तौ विश्रान्तिसुखम् अनुभूतवन्तौ । 'आवयोः अत्र आगमनं गुहावासिभिः ज्ञातं स्यात् वा ?' इति उभयोः अपि सन्देहः ।

ततः परस्परं समालोच्य तौ निर्णीतवन्तौ यत् कथमपि आक्रामकनायकः समरबाहुः रक्षणीयः इति ।

अरण्ये सर्वत्र अन्धकारः प्रसृतः । ततः उभौ अपि गुहागृहं प्रति प्रस्थितवन्तौ । अचिरात् एव ताभ्यां गुहाप्रदेशः प्राप्तः । गुहाद्वारे सोपानानां समीपे रक्षकभटः कोऽपि न आसीत् ।

''खड्गवर्मन् ! परिस्थितिः अवगता खलु भवता ? महता प्रयत्नेन एते आवयोः ग्रहणार्थं योजनां कृतवन्तः सन्ति इति भाति ।



कस्यापि स्वभावः उपदेशमात्रेण परिवर्तयितुं न शक्यः । आधिक्येन उष्णीकृतम् अपि जलम् अल्पे एव काले स्वभावसहजां शीतलतां प्राप्नोति एव ।

– चाणक्यः

आवाम् अपि बुद्ध्या तैः प्रसारिते उपायजाले पतन्तौ स्वः । यदि एवम् अभिनयः न क्रियेत तर्हि समरबाहुः कुत्र अस्ति इति अभिज्ञानं न भवेत्'' इति उक्तवान् जीवदत्तः गुहायाः सोपानेषु पदानि स्थापयन् ।

दशाधिकसोपानानि यदा अतिक्रान्तानि तदा दशाधिकाः भल्लूकभटाः शूलं प्रदर्शयन्तः तान् परितः तिष्ठन्तः तर्जनस्वरेण अवदन् – ''स्थीयतां तत्रैव ! पलायनप्रयत्नः यदि क्रियेत तर्हि अस्माकं तीक्ष्णानि शूलानि भवतां हृदये लग्नानि स्युः'' इति ।

जीवदत्तः तान् पश्यन् हसन् उक्तवान् – ''अस्माकं मारणात् पूर्वं भल्लूकगुरोः दर्शनं सकृत् कारयन्तु कृपया'' इति ।

तदा तेषु भटेषु अन्यतमः – ''अये, अलम् उच्चैः सम्भाषणेन । भल्लूकगुरुवर्यः वृकेश्वर्याः पूजायां निरतः अस्ति । आदौ वयं भवन्तौ वृकाधीनौ करिष्यामः । यदि ततः सजीवं प्रत्यागमनं भवेत् तर्हि भल्लूकगुरुवर्यस्य दर्शनं स्यात्'' इति अवदत् ।

''एवम् ! तत् वृकस्थानं कुत्र अस्ति ?'' इति पृष्टवान् जीवदत्तः ।

''मरणस्थानं द्रष्टुम् एतावत् कुतूहलं किमर्थम् ? वयं भवन्तं तत्रैव नेष्यामः'' इति वदन्तः भटाः तौ एकस्य सुरङ्गस्य अन्तः नीतवन्तः । तत्र वृकानां भयङ्करः ध्वनिः, ततः भीतानां चीत्कारः च दूरतः श्रूयते स्म ।

''अयं हाहाकारः समरबाहोः तदनुयायिनः च स्यात् कदाचित् । आवयोः प्राप्तितः पूर्वं वृकाः तौ न मारयेयुः खलु ?'' इति आतङ्केन उक्तवान् जीवदत्तः ।

खड्गवर्मा यावत् तस्य उत्तरं वक्तुम् उद्युक्तः तावता कश्चन भटः तस्य कथनं निवारयन् – ''अये, अलं सम्भाषणेन । वृकाः किं करिष्यन्ति इति अचिरात् एव स्वयं ज्ञायते'' इति उक्तवान् ।

(– अनुवर्तते)



# तृतीयं ध्वांक्षणम्

मूढमतिः काष्ठविक्रेतुः पुत्रः । पितुः मरणस्य अनन्तरं तेनापि काष्ठसङ्ग्रहणं करणीयम् अभवत् । अतः सः स्वस्य गर्दभेन सह अरण्यं गतवान् । एकं वृक्षम् आरुह्य शाखायाः अग्रभागे उपविश्य पूर्वभागस्य कर्तने उद्युक्तः अभवत् सः ।

तदा तेन मार्गेण गच्छन् कश्चित् तम् उक्तवान् – ''भोः ! तां शाखां न कर्तयतु, यतः भवान् पतेत्'' इति । तस्य वचनम् उपेक्ष्य मूढमतिः शाखां कर्तितवान् । अधः अपतत् च । सः चिन्तितवान् यत् शाखां मा कर्तयतु इति यः उक्तवान् सः महाज्योतिषिकः एव इति । अतः सः धावन् तस्य समीपं गत्वा अपृच्छत् – ''ज्योतिषिकवर्य ! मम मरणं कदा सम्भवेत् ?'' इति ।

'एषः महामूर्खः' इति सः यात्रिकः ज्ञातवान् । अतः सः उक्तवान् – ''यदा भवतः गर्दभः त्रिवारं ध्वांक्षति तदा भवतः मरणम्'' इति ।

मूढमतिः गर्दभस्य उपरि काष्ठबन्धनम् आरोप्य ततः प्रस्थितवान् । मध्येमार्गं क्वचित् धूमः आघ्रातः गर्दभेन । अतः सः सकृत् ध्वांक्षितवान् । एतस्मात् भीतः मूढमतिः स्वस्य उष्णीषेण गर्दभस्य मुखस्य पिधानं कृतवान् । श्वासोच्छ्वासार्थं कष्टम् अनुभवान् गर्दभः पुनः ध्वांक्षितवान् । भीतः मूढमतिः गर्दभस्य नासिकायां शिलाखण्डान् पूरितवान् । गर्दभः पुनः ऽपि ध्वांक्षितवान् । तृतीयवारं गर्दभेन कृतं ध्वांक्षणं श्रुत्वा भीत मूढमतिः मूर्च्छां गतः । मार्गे गच्छन्तः जनाः जलसेचनादिना तं सचेतनं कृतवन्तः । उत्थितः मूढमतिः तान् पृष्टवान् – ''एषः स्वर्गः, उत नरकम् ?'' इति । ततः तस्य मुखात् सर्वं श्रुत्वा सर्वे उपहासपूर्वकं हसितवन्तः । ।





# विचित्रं मरणशासनम्

जेरुसलेम्नगरे कश्चन प्रसिद्धः वणिक् आसीत् । तस्य एकः एव पुत्रः । वाणिज्यार्थं गतस्य तस्य वणिजः दिनानि अन्यस्मिन् देशे एव आधिक्येन यापितानि भवन्ति स्म । अतः तदीयः पुत्रः गृहे एव पठति स्म । देशसञ्चारसमये वणिजा सह तस्य दासः अपि भवति स्म ।

कदाचित् वणिक् दूरदेशे तिष्ठन् एव अनारोग्यपीडितः जातः । दिने दिने तस्य रोगः प्रवृद्धः । 'मम अवसानकालः सन्निहितः' इति ज्ञातवतः वणिजः चिन्ता आरब्धा ।

'मम पुत्रः अल्पवयस्कः अस्ति । मम सम्पत्तिं पुत्रस्य नाम्नि यदि लिखेयं तर्हि मया सह स्थितः दासः सुलभतया तां सम्पत्तिं स्वायत्तीकुर्यात् । मम पुत्राय किमपि न दद्यात् एव । अतः बहुधा विचिन्त्य योग्येन क्रमेण मया मम मरणशासनं लेखनीयम्' इति चिन्तयित्वा वणिक् एतदर्थम् एकम् उत्कृष्टम् उपायं चिन्तितवान् ।

''मरणशासनस्य लेखने यस्य उत्तमः अनुभवः अस्ति तादृशं चतुरं लेखकं कञ्चित् अत्र आह्वयतु'' इति दासम् उक्तवान् वणिक् ।

दासः तादृशं कञ्चित् लेखकम् आनीतवान् । वणिजा यथा उक्तं तथा मरणशासनं लिखितवान् सः लेखकः । मरणशासनस्य सारः एषः आसीत् - 'यावत् वणिक्पुत्रः प्राप्तवयस्कः न भवति तावत् सः दासेन पोषणीयः । प्राप्तवयस्काय तस्मै दासः यत् इच्छति तत् दातुम् अर्हति' इति ।

ततः अचिरात् एव वणिक् दिवं गतः । वणिजः दासः मरणशासनं स्वीकृत्य जेरुसलेम्नगरम् आगतवान् । सः मरणशासनानुगुणं वणिजः सम्पत्तिं स्वाधीनां कृतवान् ।

दासेन वणिजः पुत्रः योग्येनैव क्रमेण पोषितः । गच्छता कालेन वणिक्पुत्रः प्राप्तवयस्कः जातः । सः कदाचित् दासं पृष्टवान् - 'मम पितुः सम्पत्तिं मह्यं ददातु कृपया' इति । किन्तु दासः तथा कर्तुं न इष्टवान् ।

वणिजा यद् मरणशासनं लिखितं तद् वणिजः पुत्राय दर्शयित्वा - ''पश्यतु, भवतः पिता मरणसमये स्वस्य मरणशासनं लेखित-

वान् । तद् अत्र अस्ति । एतस्य अनुगुणं भवतः पितुः समग्रा सम्पत्तिः मम अधीना भवति । एतस्यां सम्पत्त्यां यत् अहम् इच्छामि तदेव भवते दास्यामि, न तु समग्राम्'' इति उक्तवान् ।

मरणशासनं दृष्ट्वा वणिजः पुत्रः दिग्भ्रान्तः जातः । 'किं करणीयम्' इति न ज्ञातं तेन । कश्चन वृद्धः तस्य पितुः मित्रम् आसीत् । तं प्रवृत्तं समग्रम् उक्त्वा साहाय्यं प्रार्थितवान् सः ।

सः वृद्धः महाबुद्धिमान् आसीत् । लौकिकज्ञानम् अपि महत् आसीत् तस्य । सः वणिक्पुत्रस्य वचनं श्रद्धया श्रुत्वा उक्तवान् - ''भवान् श्वः न्यायालयम् आगच्छतु । पित्रा लिखितं मरणशासनम् अपि आनयतु । दासम् अपि आगन्तुं सूचयतु । मया यथा उक्तं तथैव व्यवहरति चेत् सर्वं सम्यक् भविष्यति'' इति ।

परेद्युः प्रातः वणिजः पुत्रः मरणशासनं गृहीत्वा न्यायालयम् आगतवान् । दासः अपि आगतवान् । न्यायाधीशस्य सम्मुखे मरणशासनं पठितम् ।

''दासः यत् इच्छति तत् पुत्राय दद्यात् इति अत्र लिखितम् अस्ति । एवं ननु ?'' इति दासं पृष्टवान् न्यायाधीशः ।

''आम् । अहम् अल्पं किञ्चित् दातुम् इच्छामि । तदेव स्वीकर्तुम् अर्हति एषः'' इति अवदत् दासः ।

''भवान् वणिजः समग्रां सम्पत्तिम् एव खलु इच्छति ?'' इति पृष्टवान् न्यायाधीशः ।

''आम् । सा एव मम इच्छा'' इति सन्तोषेण उक्तवान् दासः ।

'भवान् यत् इच्छति तत् एव पुत्राय दातव्यम् इति मरणशासनस्य तात्पर्यम् । भवान् तु समग्रां सम्पत्तिम् इच्छति । अतः समग्रा सम्पत्तिः एव भवता दातव्या'' इति निर्णयं श्रावितवान् न्यायाधीशः ।

दासः अनन्यगतिकतया वणिजः पुत्राय सम्पत्तिम् अर्पितवान् ।

एवं वणिजः सम्पत्तिः तत्पुत्रेण एव प्राप्ता ।



वेताल-कथा

# पण्डितस्य अभिज्ञानम्

दृढवती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् । ततः यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''राजन् ! भवतः दुरवस्थायाः दर्शनात् मयि करुणा उदेति । एतादृशे मध्यरात्रे भूतप्रेतादयः भवन्तं वशीकुर्युः, हिंस्रपशवः प्राणापायं जनयेयुः वा । एवं स्थिते अपि किमर्थम् एषा व्यर्थे कार्ये प्रवृत्तिः भवतः ? राजधानीं गत्वा सुखेन तिष्ठतु तावत् । दीर्घकालस्य सम्पर्कः अस्ति चेदपि भवतः लक्ष्यं किम् इति मया अद्यावधि न अवगतम् । कस्य साहाय्यार्थम् एतावत् कष्टम् अनुभूयते



भवता ? कोऽपि स्वार्थी गुरुः भवन्तम् एतादृशे कार्ये नियोजितवान् तु न स्यात् खलु ? यदि कश्चित् गुरुः एव भवन्तम् एतस्मिन् कार्ये नियोजितवान् स्यात् तर्हि भवतः लक्ष्यस्य सिद्धिः सन्देहास्पदं स्यात् । यतः फलप्राप्ति-समये गुरुः एव भवन्तं लक्ष्यच्युतं कुर्यात् । गुरवः चञ्चलचित्ताः भवन्ति बहुधा । तेषां व्यवहारे दक्षता तु नाममात्रेण अपि न भवति । स्वार्थः अहङ्कारः च तेषु महता प्रमाणेन भवति । शिष्यस्य गुणोत्कर्षं प्रगतिं च दृष्ट्वा ते असूयाम् अनुभवन्ति । शिष्यं शत्रुवत् पश्यन्ति ते । एषा हीनप्रवृत्तिः न शिष्यस्य प्रगतिं साधयति, न वा तदीयस्य उन्नतिम् । तथापि तां न परित्यजन्ति ते । अत्र उदाहरणरूपेण पण्डितस्य जगन्नाथस्य कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

प्राचीने काले गोमतीनद्याः तीरे हरिद्वनं नाम कश्चन ग्रामः आसीत् । समग्रे ग्रामे सस्यसमृद्धिः अत्युत्तमा आसीत् । वृक्षलताः गुल्मादयः च फलपुष्पपल्लवादिभिः विराजन्ते स्म तत्र । अतः एव धान्यप्राप्तिकाले ग्रामीणाः सर्वे नद्याः तीरे उपस्थाय विशेषोत्सवम् आचरन्ति स्म ।

एतस्मिन् ग्रामे जगन्नाथः नाम कश्चन पण्डितः निवसति स्म । पाण्डित्येन तत्सदृशः प्रायः समीपग्रामेषु अपि कोऽपि न आसीत् । जगन्नाथः उत्तमः कविः अपि । तस्य काव्यानि पाण्डित्यपूर्णानि भवन्ति स्म । अतः तदीय-कविताः धनिककुलोत्पन्नाः केचन सुशिक्षिताः जनाः एव शृण्वन्ति स्म, न तु अशिक्षिताः सामान्याः । जगन्नाथः चिन्तयति स्म - 'अशिक्षिताः एते ग्रामीणाः मम काव्यस्य श्रेष्ठतां रसयुक्ततां च कथम् अवगन्तुं शक्नुयुः ?' इति । अतः तादृशानां विषये अनादरं प्रकटयति स्म सः । सामान्याः अपि तस्मात् दूरे एव तिष्ठन्ति स्म ।

श्रीधरः तस्य एकमात्रपुत्रः । श्रीधरस्य स्वभावः पितुः स्वभावात् सर्वथा विरुद्धः आसीत् । श्रीधरः प्रकृतिसौन्दर्याराधकः । आदिनं सः ग्रामे क्षेत्रेषु अरण्ये वा अटन् प्रकृतिसौन्दर्यस्य आस्वादनं करोति स्म । मनोमोहकानि पद्यानि श्रावयति स्म सः । तानि पद्यानि सरलानि अपि भवन्ति स्म । अतः सामान्याः अपि जनाः तस्य पद्यम् अवगन्तुं शक्नुवन्ति स्म । विरामकाले ते तं वदन्ति स्म - 'किमपि पद्यं श्रावयतु' इति । श्रीधरः

सन्तोषेण पद्यानि श्रावयति स्म । केनापि अर्थः न अवगतः चेत् सरलैः शब्दैः अर्थं विवृणोति स्म सः ।

श्रीधरस्य एषः व्यवहारः जगन्नाथाय न रोचते स्म । सः पुत्रं वदति स्म - ''कविता सदापि सहृदयानां पुरतः एव श्रावणीया । अशिक्षिताः ग्रामीणाः जनाः कवितायाः रसं कथं वा जानीयुः ? अतः तेभ्यः कवितायाः श्रावणं नाम सरस्वत्याः अपमाननम् एव । भवान् स्वस्य एतां प्रवृत्तिं परित्यजतु । अन्यथा भवतः गौरवं नष्टं भविष्यति'' इति ।

पित्रा बहुधा बोधितः तर्जितः चापि श्रीधरः स्वस्य प्रवृत्तिं न त्यक्तवान् आसीत् । 'एतस्य स्वभावस्य परिवर्तनं ब्रह्मणा अपि कर्तुं न शक्यते' इति निर्णीय मौनम् आश्रितवान् आसीत् जगन्नाथः ।

एवम् एव दिनानि गतानि । हरिद्वनात् अनतिदूरे स्थिते माधवपुरे निवसन् नारायणाचार्यनामकः कश्चित् स्वपुत्रीं शारदां श्रीधराय दातुम् इष्टवान् । शारदा नारायणाचार्यस्य एकमात्रपुत्री । पिता एव तस्याः विद्यागुरुः आसीत् ।

जगन्नाथः पुत्रेण सह गत्वा वधूं दृष्टवान् । वध्वाः ज्ञानस्य परीक्षा अपि तेन कृता । विविधाः प्रश्नाः तेन पृष्टाः । शारदा यथा-योग्यम् उत्तरं दत्तवती । एतेन जगन्नाथः सन्तुष्टः जातः । तां स्नुषात्वेन स्वीकर्तुम् अङ्गीकारं सूचितवान् सः ।

श्रीधरस्य अपि शारदा सम्मता जाता । तस्याः बुद्धिमत्तां, व्यवहारमृदुतां, सौन्दर्यं च



दृष्ट्वा सः आकृष्टः जातः आसीत् । अतः तयोः विवाहः निश्चितः ।

ततः मासाभ्यन्तरे शारदा-श्रीधरयोः विवाहः प्रवृत्तः । बान्धवाः शारदायाः सौन्दर्य-व्यवहारादिकं दृष्ट्वा सन्तोषं प्रकटितवन्तः । श्रीधरं चापि अभिनन्दितवन्तः । शारदा पतिगृहे वासम् आरब्धवती ।

एकदा सायङ्काले सेवकः रत्नेशः गृहस्य पुरतः दोहनं कुर्वन् आसीत् । ततः अनतिदूरे स्थित्वा शारदा सुमधुरकण्ठेन एकं श्लोकं गायति स्म । गीतं समाप्य सा रत्नेशं श्लोकस्य तात्पर्यम् उक्तवती -

''रत्नेश ! कदाचित् गोकुले यशोदा अपि एवम् एव दोहनं कुर्वती आसीत् । तत्काले तत्र आगतः कृष्णः बाहुलतां मातुः कण्ठे अर्पयन् अपृच्छत् - 'अम्ब ! कदा मह्यं दुग्धं दीयते ?'



इति । यशोदा उक्तवती - 'यदा अन्धकारः भविष्यति तदा' इति । ''अन्धकारः जातः इति कथं ज्ञायते ?' इति मुग्धस्वरेण पृष्टवान् कृष्णः । यशोदा उक्तवती - 'तत्काले किमपि न दृश्यते' इति । तदा कृष्णः स्वस्य हस्ताभ्यां नेत्रे पिधाय - 'अम्ब ! अन्धकारः प्रसृतः, यतः इदानीं मया किमपि न दृश्यते । अतः क्षीरं ददातु' इति उक्तवान् । पुत्रस्य एतं व्यवहारं दृष्ट्वा यशोदा आतृप्ति हसितवती'' इति ।

एवम् अर्थं विवृत्य सा तदेव पद्यं पुनरपि गीतवती । तदा रत्नेशः तु आत्मानं यशोदां भावयन् इव तन्मयतया गीतं शृण्वन् नेत्रे निमील्य गीतस्य तात्पर्यं मनसि आकलयन् दोहनं करोति स्म । तस्य मुखे परमानन्दः स्फुटतया लक्ष्यते स्म ।

जगन्नाथः दूरे एव स्थित्वा एतत्सर्वं लक्षितवान् । तदनन्तरं सः स्नुषां शारदां, सेवकं रत्नेशं च भावगर्भितदृष्ट्या दृष्ट्वा ततः मौनेन निर्गतवान् ।

आश्चर्यं नाम अनन्तरदिने कृष्णलीला-तरङ्गिण्याः एकं श्लोकं रत्नेशं श्रावयित्वा सरलशैल्या भावार्थं विवृण्वन् जगन्नाथः दृष्टः श्रीधरशारदाभ्याम् । जगन्नाथे जातं परिवर्तनं दृष्ट्वा तौ नितराम् आश्चर्यचकितौ । एतस्य कारणं किम् इति ताभ्यां न ज्ञातम् । जगन्नाथः पुत्रं स्नुषां च दृष्ट्वा सकृत् निर्मलं मन्दहासं प्रकटितवान् । एतत् दृष्ट्वा पुत्रः स्नुषा च नितरां सन्तुष्टौ ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! जगन्नाथस्य आशयः आसीत् यत् सुशिक्षिताः एव काव्यस्य श्रवणे अधिकारिणः इति । अशिक्षितानां कृते पद्यस्य श्रावणं सरस्वत्याः अपमाननम् एव इति सः भावयति स्म । एतम् एव अंशं मनसि निधाय पुत्रे परिवर्तनम् आनेतुं सः बहुधा प्रयत्नं कृतवान् आसीत् । पुत्रं सः बोधितवान् तर्जितवान् चापि । अन्ते पुत्रे किमपि परिवर्तनम् आनेतुम् अशक्तः सः मौनम् आश्रितवान् आसीत् । एतस्मात् स्पष्टं यत् सः सामान्यान् पद्यं श्रावयितुं सर्वथा न इच्छति इति । किन्तु यदा स्नुषा सेवकं कृष्णलीलातरङ्गिण्याः श्लोकं श्रावयन्ती आसीत् तदा किमर्थं तेन न निवारितम् ? अनन्तरदिने तु सः स्वयम् एव कृष्णलीला-तरङ्गिण्याः श्लोकानां बोधनम् आरब्धवान् । किमर्थम् एवं कृतं तेन ? पुत्रस्य लोकप्रियताम् असहमानः सः अनन्यगतिकतया तादृशं कार्यं

किं कृतवान् ? अथवा तस्य विवेकः भ्रष्टः जातः ? पण्डितः अन्यस्य उत्कर्षं सर्वथा न सहते इत्येतत् एतस्मात् प्रसङ्गात् सिद्धं खलु ? पुत्रे असूयां वहता जगन्नाथेन किं पितृधर्मः सम्यक् परिपालितः ? मम एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नः भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् - ''प्रतिभाशालिषु पाण्डितेषु अहङ्कारः किञ्चित्प्रमाणेन भवति यत् तत् तु न आश्चर्याय । यावत् स्नुषा गृहं न आगता तावत् जगन्नाथः धनिकान् शिक्षितान् एव काव्यं श्रावयन् आसीत् । सामान्यान् जनान् सः काव्यश्रावणार्थं न स्वीकृतवान् एव आसीत् । अतः एव सः चिन्तयति स्म यत् ग्रामीणान् उद्दिश्य काव्यस्य श्रावणं व्यर्थं कार्यम् इति । अतः एव तादृशे कार्ये प्रवृत्तं पुत्रं तस्मात् निवारयितुं सः बहुधा प्रयत्नं कृतवान् । 'अशिक्षितान् उद्दिश्य काव्यस्य श्रावणं सरस्वत्याः अपमाननाय' इति सः निर्णीतवान् आसीत् । किन्तु यदा स्नुषा सेवकं रत्नेशं कृष्णलीलातरङ्गिणीश्लोकं श्रावितवती तदा सेवकस्य मुखे आनन्दविलासः दृष्टः । एतत् जगन्नाथः दूरात् अवलोकितवान् । तदा सः अवगतवान् यत् अद्यावधि मम यत् चिन्तनम् आसीत् तत् असमीचीनम् इति । 'सामान्याः अपि योग्येन क्रमेण बोधिताः चेत् कवितायाः रसम् आस्वादयितुम् अर्हन्ति, आनन्दं च अनुभवितुम् अर्हन्ति' इति सः प्रत्यक्षानुभव-द्वारा अवगतवान् । तदा सः चिन्तितवान् - 'मया अद्यावधि सामान्यानां विषये न चिन्तितम् आसीत् इत्यतः मयि मिथ्याधारणा आसीत् । यदि इतःपरम् अपि अहम् एवमेव व्यवहरेयं तर्हि जनानाम् अनादरपात्रं भवेयम्' इति । एवं चिन्तयति तस्मिन् महत् परिवर्तनं जातम् । अतः सः रत्नेशं श्लोकं पाठयितुम् उद्युक्तः जातः । अज्ञानावरणम् अपगतम् आसीत् तस्य । अतः सः न अविवेकी, न वा परोत्कर्षस्य असोढा'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



# गणपतिदेव पाहि नः

नूतनकार्यस्य आरम्भात् पूर्वं जनाः निर्विघ्नतया कार्यस्य परिसमाप्त्यर्थं गणेशं प्रार्थयन्ति इति तु परम्परा ।

वयम् अस्माकं प्रीतिपात्रस्य गजमुखस्य महाकायस्य गणपतेः उत्सवम् अस्मिन् वर्षे अगस्ट्मासे आचरामः । स च उत्सवः गणेशचतुर्थीनाम्ना आचर्यते । एषः महोत्सवः महता उत्साहेन समग्रे भारते आचर्यते । महाराष्ट्रे तु विशेषतया ।

महाराष्ट्रे गणेशोत्सवः चतुर्थीदिने आरभ्यते । तन्नाम भाद्रपदमासस्य चतुर्थीदिने (अगस्ट्मासे सप्टम्बर्मासे वा) भवति । दश दिनानि यावत् एषः उत्सवः प्रचलति । दशदिनानन्तरं (तन्नाम एकादशे दिने) अनन्तचतुर्दशीदिने उत्सवस्य समाप्तिः भवति ।

गृहेषु गणेशस्य लघुविग्रहान् स्थापयित्वा पूजां कुर्वन्ति जनाः । किन्तु मार्गे वसतिसमुच्चयेषु च सामूहिकतया क्रियमाणासु पूजासु सामान्यतः विग्रहाः महाकारकाः भवन्ति । महाविग्रहाः ८-१० मीटर्परिमिताः अपि भवन्ति क्वचित् ।

गतवर्षे हैदराबाद्नगरे स्थिते खैरताबाद्प्रदेशे स्थापितः विग्रहः ३० पादाङ्गुलमित-औन्नत्यवान् आसीत् ।

विसर्जनदिने, तन्नाम अनन्तचतुर्दशीदिने, पुष्पैः वर्णरञ्जितैः कागदैः च अलङ्कृताः विग्रहाः शोभायात्रावाहनेन नीत्वा जले निमज्ज्यन्ते ।

विग्रहाः पुष्पैः, वातामैः, नाणकैः, भल्लातकबीजैः, शुष्काभिः द्राक्षाभिः च अलङ्क्रियन्ते । 'गणपतिबप्पा मोरय' इति घोषणा वातावरणे अनुरणति । गणेशस्य स्तुतिं कुर्वन्तः जनाः गीतानि गायन्ति, नृत्यं कुर्वन्ति च । भेरीप्रभृतीनां वाद्यानां वादनैः एकं सुन्दरं वातावरणं निर्मितं भवति । मुम्बय्यां विग्रहाः समुद्रे निमज्ज्यन्ते ।

गणेशचतुर्थीदिने मोदकनामकं विशिष्टं भक्ष्यं नैवेद्यरूपेण समर्प्यते । मोदकं गणेशस्य प्रियं भक्ष्यम् । तण्डुलपिष्टं पक्वं कृत्वा पटलं निर्माय नारिकेलस्य गुडस्य च मिश्रणं तस्य अन्तः पूरयित्वा पक्त्वा मोदकं निर्मीयते । गणेशचतुर्थ्याः प्रथमदिने सामान्यतः मधुरभक्ष्यं क्रियते । न केवलं मोदकानि, अपि तु अपूपाः, लड्डुकानि,



पष्कुल्यः, कडबोलीनामकं खाद्यं, अनरसनामकं मधुरखाद्यं च एतस्य पर्वणः वैशिष्ट्यानि ।

भारते गणेशचतुर्थ्याः आचरणे प्रदेशशः वैविध्यं दृश्यते । उत्तरप्रदेशे विवाहिताः महिलाः आदिनम् अनशनव्रतम् आचर्य रात्रौ चन्द्रदर्शनं कृत्वा एव भोजनं कुर्वन्ति । दक्षिणभारते अपि जनाः अत्यन्तम् उत्साहेन गणेशचतुर्थीम् आचरन्ति । कर्णाटके एतत् पर्व 'गौरी-गणेशहब्ब'नाम्ना आचर्यते । गौर्याः गणेशस्य च पर्वणोः संयुक्तपर्व इदम् । तमिळुनाडुराज्ये अपि परम्परानुसारं प्रतिगृहे एतत् पर्व आचरन्ति । जनाः गणेशस्य मृत्तिकानिर्मितान् लघुविग्रहान् क्रीत्वा कागदैः लघुच्छत्राणि निर्माय विग्रहान् अलङ्कुर्वन्ति । कोळकट्टैनामकं खाद्यं, लड्डुकानि च कृत्वा देवाय नैवेद्यरूपेण समर्पयन्ति । मुम्बय्याम् इव समग्रे देशे अपि एषु दिनेषु समूहपूजाः प्रचलन्ति ।

१८९४ तमवर्षं प्रति प्रतिगच्छाम तावत् । तदा भारतदेशः आंग्लसर्वकारस्य अधीनः आसीत् । भारतीयानां भविष्यम् अन्धकारमयम् एव आसीत् । समग्रदेशः भ्रमादीनः आसीत् । तदा एव महाराष्ट्रराज्ये ऐक्यम् आनेतुं काङ्ग्रेस्नायकः बालगङ्गाधरतिलकः प्रयत्नम् आरब्धवान् आसीत् । सार्वत्रिकरूपेण



## भवन्तः जानन्ति किम् ?

- प्राचीनकालतः अपि गजाः बुद्धिमत्तानिमित्तं प्रसिद्धाः सन्ति । अतः गजस्य मुखेन युक्तः गणेशः विद्याधिदेवतात्वेन निर्दिश्यते यत् तत्र आश्चर्यं किमपि नास्ति ।
- प्राणिषु गजस्य एकस्य एव मुखम् ओङ्काराकारकं भवति ।
- तादृशस्य गजमुखस्य महाकायस्य देवस्य वाहनं लघुमूषकः इति विषयः तु आश्चर्यं जनयति खलु ? गणेशस्य सर्वेषु चित्रेषु गजस्य मुखं, मनुष्यस्य शरीरं, लघ्वाकारकः मूषकः च भवति । एषः अंशः बोधयति यत् देवस्य दृष्ट्या लघुजन्तवः, महाजन्तवः चेति भेदभावः नास्ति इति ।

गणेशचतुर्थ्याः आचरणं कुर्वन्तः जनाः अधिकसङ्ख्यया भागम् ऊढ्वा सङ्घटिताः भवेयुः इति तस्य अपेक्षा आसीत् । 'जनान् सङ्घटितान् कर्तुम् एषः उत्सवः साधनरूपेण भवतु' इति तिलकवर्यस्य आशयः आसीत् । परोक्षरूपेण राष्ट्रकेन्द्रितचिन्तनस्य, परम्परायाः च विषये अभिमानजागरणस्य कार्यम् एतेन साधितं भवति इति तस्य मतम् आसीत् । देशभक्ति-गीतानि सामूहिकनृत्यानि च उत्सवस्य अङ्ग-भूतानि आसन् । 'तमाशा'नामकं जानपद-रूपकम् उत्सवसमये अभिनीयते स्म । तत्रापि मध्ये मध्ये राष्ट्रियभावस्य जागरणार्थं देशभक्तिगीतानि योज्यन्ते स्म ।

# प्रमुखाः कथाः



देवः गणेशः कथं गजस्य मुखं प्राप्तवान् इति भवन्तः जानन्ति किम् ? एतद्विषये अनेकाः कल्पितकथाः श्रूयन्ते । तासु एका कथा एवम् अस्ति –

देवी पार्वती गणेशं प्रसूतवती । सा सर्वान् देवान् आशीर्वाद-दानाय निमन्त्रितवती । सर्वे देवाः आगत्य पार्वतीम् अभिनन्द्य शिशोः गणेशस्य आशीर्वादं कृतवन्तः । किन्तु शनिः एकः शिशुं द्रष्टुं निराकृतवान् ।

एतत् ज्ञात्वा पार्वती खिन्ना अभवत् । तदा शनिः उक्तवान् – ''अहं केनचित् शापेन ग्रस्तः अस्मि । अहं यत् पश्यामि तत् शतधा खण्डितं सत् नष्टं भविष्यति । अतः अहं भवत्याः पुत्रं न पश्यामि'' इति । किन्तु पार्वती न अङ्गीकृतवती । ''मम पुत्रस्य आशीर्वादः भवता करणीयः एव'' इति सानुरोधम् उक्तवती सा ।

## गणेशस्य विषये किं जानन्ति भवन्तः ?

१. गणेशस्य सहोदरः कः ?

२. लेखकाय गणेशाय महाभारतं कः वदन् आसीत् ?

३. गणेशचतुर्थी कदा आचर्यते ?

४. गणेशस्य प्रियं भक्ष्यं किम् ?

५. गणेशचतुर्थ्याः एकादशं दिनं किम् इति आचर्यते ?

६. गजस्य मुखं किं चिह्नं द्योतयति ?

७. नूतनरीत्या गणेशचतुर्थ्याः आचरणं भारतीयानां कृते कः परिचायितवान् ?

८. गणेशस्य दन्तभञ्जनस्य कारणं कः ?

### उत्तरं ज्ञातुं प्रयतन्ताम्

सङ्कोचम् अनुभवन् एव शनिः अग्रे आगत्य शिशुं दृष्टवान् । अनुक्षणम् आघातकरी घटना प्रवृत्ता । गणेशस्य शिरः खण्डशः भग्नम् अभवत् । दुःखतप्ता पार्वती तदा एव अश्रुमोचनं त्यक्तवती, यदा च गजस्य मुखं योजयित्वा गणेशे विशिष्टाः गुणाः पूरिताः ।

अपरा कथा एवम् अस्ति - देवी पार्वती मृत्तिकया बालकस्य विग्रहं कृत्वा तस्मिन् प्राणान् पूरितवती । अनन्तरं सा तं बालकं द्वारे स्थगयित्वा - ''प्रासादं रक्षतु, अहं स्नानार्थं गच्छामि'' इति सूचितवती । यदा शिवः अन्तः प्रवेष्टुं प्रयत्नं कृतवान् तदा बालकः शिवस्य प्रयत्नं निवारयन् प्रश्नान् पृष्टवान् । क्रुद्धः शिवः तस्य बालकस्य शिरः कर्तितवान् । यदा पार्वती एतं विषयं ज्ञातवती तदा सा अतीव दुःखिता अभवत् । गजस्य शिरः आनीय यदा योजितं तदा एव पार्वत्याः दुःखं शान्तं जातम् ।

## वर्णविनोदः

अत्र अस्ति आकर्षकं गणेशस्य चित्रम् । गणेशः वर्णयोजनम् इच्छति । किमर्थं विलम्बः बालाः ? वर्णयोजनम् आरभन्ताम् !

## पूर्वतनपृष्ठस्य प्रश्नानाम् उत्तराणि

*भवतां उत्तराणि अत्र परिशीलयन्तु ।*

१. देवः कार्तिकेयः । तस्य वाहनं मयूरः ।

२. महर्षिः व्यासः ।

३. भाद्रपदमासस्य शुक्ल-चतुर्थ्याम् । अगस्ट्-सप्टम्बर्-मासयोः कदाचित् ।

४. गुडनारिकेलयोः मिश्रणेन सज्जीकृतं मधुरभक्ष्यं -'मोदकं' नाम ।

५. अनन्तचतुर्दशी ।

६. ओङ्कारचिह्नम् ।

७. राष्ट्रवादी स्वातन्त्र्ययोद्धा बालगङ्गाधरतिलकः ।

८. परशुरामः, यश्च कोपार्थं प्रसिद्धः ।





# सन्तोषस्य मार्गः

होजा नासीरुद्दीनः नगरं गच्छन् आसीत् । तदा सः मार्गे कस्यचित् वृक्षस्य अधः दुःखेन उपविष्टवन्तं कञ्चित् पुरुषं दृष्टवान् । सः पुरुषः अतीव दुःखितः दृश्यते स्म इत्यतः होजा नासीरुद्दीनः तं पृष्टवान् - 'किम् अभवत् भवतः ?' इति । तदा सः पुरुषः दीर्घं निश्श्वसन् - ''जीवने आसक्तिदायकं किमपि नास्ति इति भाति मम । मम समीपे प्रभूतं धनम् अस्ति । कष्टं किमपि नास्ति एव । तथापि कोऽपि विषयः मयि आनन्दं न जनयति । अहं महतीं जामिताम् अनुभवामि । कस्मिंश्चित् अपि उत्साहः एव नास्ति । अतः अहं यात्रां कुर्वन् अस्मि । 'जगति आसक्तिदायकं किमपि अस्ति किम् ? इति ज्ञातुम् एव मम यात्रा । किन्तु एतावत्पर्यन्तं तादृशं किमपि न दृष्टं मया'' इति अवदत्, पुनरपि शिरसि हस्तं स्थापयित्वा यथापूर्वं दुःखं प्रकटयन् उपविष्टवान् च ।

एतत् श्रुतवान् होजा झटिति तस्य पुरुषस्य पार्श्वे विद्यमानं स्यूतं गृहीत्वा पलायनं कृतवान् । होजा मार्गे हरिणगत्या धावति स्म । यतः सर्वेऽपि मार्गाः तस्य परिचिताः आसन् । अतः च समीपमार्गेण धावन् मुख्यमार्गं प्राप्तवान् । यस्य स्यूतः आसीत् तस्मात् बहु अग्रे गतवान् होजा । पर्याप्तदूरगमनानन्तरं होजा स्यूतं मार्गपार्श्वे स्थापयित्वा किञ्चिद्दूरे उपविश्य तस्य पुरुषस्य प्रतीक्षां कृतवान् ।

खिन्नः अदृष्टहीनः च सः पुरुषः आतुरतया सर्वत्र पश्यन् किञ्चित्कालानन्तरं तत् स्थलं प्राप्तवान् । स्यूतः नष्टः इति कारणतः सः नितरां खिन्नः दृश्यते स्म । यदा पतितः स्यूतः दृष्टः तदा सः तं हस्तेन गृहीत्वा आनन्देन हर्षोद्गारं कृतवान् ।

''एषः एव सन्तोषस्य मार्गः'' इति हसन् तम् उक्तवान् होजा ।



# भारत-गौरव-गाथा

**महासंस्कृत्याः स्थूलदर्शनम्, प्रतियुगं सत्यान्वेषणार्थं कृताः विशेषयत्नाः**

## १८. कथानाम् आन्तर्यम्



"भवन्तौ बालौ नितराम् अदृष्टशालिनौ । बहुवारं मम मनसि इच्छा उत्पन्ना यत् पुनः बाल्यावस्थां प्रविश्य पितामहस्य मुखात् कथां शृणुयाम् इति" इति जयश्रीः स्वपुत्रौ सन्दीपं चमेलीं च उद्दिश्य उक्तवती ।

"युक्तम् एतत् । कालः यदि प्रतिगच्छेत्, यदि च भवती बाला भवेत्, तर्हि निश्चयेन अदृष्टशालिनी भवेत्, परन्तु तदा सन्दीपः चमेली च भवत्याः अपत्ये न भवेताम्" इति उक्तवान् सन्दीपः ।

पाकशालातः भोजनस्थलं प्रति स्थालिकादीनाम् आनयने बालौ मातुः साहाय्यं कुरुतः स्म । तदा ताभ्यां लक्षितं यत् पितामहः आगत्य आसन्दे उपविष्टः अस्ति इति ।

"वत्से ! भवती अपि यदि अस्माभिः सह भोजनं कुर्यात् तर्हि अहं सन्तोषेण भवतीम् अपि ताः कथाः वदेयं, याश्च एतौ वदामि । परन्तु भवती कदापि तथा न करोति । अस्माकं भोजनस्य अनन्तरम् एव भवती भोजनं करोति सदापि" इति प्रीत्या उक्तवान् देवनाथवर्यः ।

तदा जयश्रीः लज्जया उक्तवती – "तथापि चिन्ता नास्ति मम आर्य ! भवतः मुखात् यत् श्रुतं तत् चमेली स्वशैल्या मां वदति । अद्य भोजनसज्जीकरणे बालौ मम साहाय्यं कुरुतः इत्यतः अहम् अत्र उपविश्य काञ्चन मम संशयान् परिहर्तुं शक्नोमि" इति वदन्ती जयश्रीः स्वस्य



आसन्दं देवनाथवर्यस्य समीपं नीतवती ।

''धन्यवादाः अम्ब ! अनेके धन्यवादाः । पितामहः यथा अधिकाः कथाः वदेत् तथा भवत्या प्रचोदनीयः सः'' इति सन्तोषेण उक्तवान् सन्दीपः ।

''पुत्र ! भवतः निराशा भवेत्, यतः मम प्रश्नात् कथाः कदाचित् न लभ्येरन् । जगन्नाथदेवालयः, कन्याकुमारीमन्दिरम् इत्यादीनां विषये याः कथाः श्रूयन्ते तासां पृष्ठभूमिकायां वस्तुस्थितिः कियता प्रमाणेन स्यात् इति ज्ञातुं महत् अस्ति मम कुतूहलम्'' इति उक्तवती जयश्रीः ।

''वत्से ! स्थाने कुतूहलं भवत्याः । तासां कथानां पृष्ठभूमिकायां वास्तविकांशाः सन्ति एव बहवः । किन्तु ते कल्पनांशेन सम्मिश्रिताः भवन्ति, जानपदगीत-कथादिरूपम् आप्नुवन्ति च । दौर्भाग्यं नाम एतस्मिन् क्षेत्रे संशोधनम् आधिक्येन न प्रवृत्तम् । वास्तवांशानां चयनार्थम् उद्युक्तः संशोधकः कल्पनापटुः अपि स्यात् । वस्तुस्थितिः का, कल्पनांशः कः इति अभिज्ञानं, तयोः पृथक्करणं च न सुकरम् । तत्रापि वस्तुस्थितिः कथामुखं धरति इत्यतः क्लेशः अधिकः । अतः एतत्क्षेत्रे शोधं कर्तुम् इच्छतः सामर्थ्यं, वस्तु-स्थित्यभिज्ञानकौशलं च विशेषतः स्यात्'' इति उक्तवान् देवनाथवर्यः ।

''किं भवान् उदाहरणमेकं दर्शयितुं शक्नुयात् ?'' इति पृष्टवान् सन्दीपः ।

''अस्माकं देशस्य अतिपुरातनेषु शिवदेवालयेषु अन्यतमः अस्ति काशीस्थः विश्वनाथदेवालयः । काशी 'वाराणसी' इत्यपि उच्यते । जगतः अतिप्राचीनतमं नगरम् अस्ति वाराणसी ! एतद्विषये काचित् कथा एवं श्रूयते –

एकदा शिवः वाराणस्याः राज्ञे दिवोदासाय क्रुद्धः सन् नगरं त्यक्तवान् एव । महादेवः चिन्तितवान् आसीत् यत् यदा अहं क्षेत्रं त्यजामि तदा एतत् नगरं दुरवस्थां सम्मुखीकुर्यात् इति । परन्तु तादृशं किमपि न जातम् । जनाः पूर्ववत् सुखसम्पन्नाः एव आसन् । राज्ञः कारुण्यात् ते रक्षिताः आसन् ।

बहूनां वर्षाणाम् अनन्तरं राजा ज्ञातवान् – 'सुखमात्रप्राप्तिः एव जीवनं न । मया मम प्रजाभिः च जीवनस्य चरमं लक्ष्यं कदापि न विस्मर्तव्यम् । देवे अभेदप्राप्तिः एव मानव-जीवनस्य अन्तिमं लक्ष्यम्' इति । राज्ञा यदा

एतत् अवगतं तदा भगवान् शिवः काशीं प्रत्यागतवान्'' इति उक्तवान् देवनाथवर्यः ।

तदा चमेली पृष्टवती - ''अस्याः कथायाः पृष्ठभूमौ कोऽपि निगूढः तत्त्वांशः अस्ति किम् ?'' इति ।

''अस्ति एव निश्चयेन । किञ्चित्कालं यावत् वाराणस्यां बौद्धधर्मस्य प्रभावः आसीत् । ततः परम्परागतं शिवपूजादिकार्यं दुर्बलम् अभवत् । बौद्धधर्मस्य चिन्तनानुसारं 'देवः' एव जीवनस्य अन्तिमं लक्ष्यं न । एतं विषयं भवन्तः जानन्ति एव । यदा जनेषु दैवभक्तिः पुनः प्रबला जाता तदा कथाकाराः उक्तवन्तः यत् शिवस्य प्रत्यागमनं जातम् इति । एवम् एषा कथा तत्कालीनां सामाजिकस्थितिं ज्ञापयति'' इति उक्त-वान् देवनाथवर्यः ।

''एवम् ? एवं तर्हि कथाः कथामात्र-रूपेण न स्वीकरणीयाः, प्रत्युत ततः ऐतिहासिकांशस्य प्राप्तिः अपि चिन्तनीया । एवं ननु ?'' इति पृष्टवान् सन्दीपः ।

तदा देवनाथवर्यः अवदत्,- ''कश्चित् आसक्तिमान् जनः जानपदकथासु ऐतिहासिकांशान् यथा, तथैव अन्यान् सामाजिकांशान् अपि प्राप्तुम् अर्हति । जनानां सामाजिकस्थितौ मानसिकस्थितौ च जायमानानि परिवर्तनानि अपि ततः ज्ञायन्ते क्वचित् । भवन्तः जगन्नाथस्य कथां जानन्ति एव खलु । सा कथा एवं तु न सूचयति यत् ब्राह्मणकुले जातः विद्यावान् कश्चित् वनवासिनीं परिणेतुम् अर्हति, तयोः सन्तत्या अर्चकत्वेन या पूजा क्रियते सा विनावचनम् अङ्गीकरणीया इति । तथापि अस्माभिः सूक्ष्मचिन्तनेन एतत् अवगन्तव्यं भवति । सहस्रवर्षेभ्यः पूर्वं वनवासिनां विषये जनानां मनोभावना कथम् आसीत्, अनन्तरं कथम् अभवत् - इत्यादिकानाम् अवगमनं सूक्ष्मदृष्टिमतः एव भवितुम् अर्हति'' इति ।

जयश्रीः 'श्वशुरः आदौ भोजनं समापयतु' इत्याशयेन तं भोजनार्थम् आहूतवती । किन्तु देवनाथः तां निवारयन् कथाम् अनुवर्तित-वान् ।

''मधुरैनगरे स्थितायाः मीनाक्षीदेव्याः विषये श्रूयमाणां कथाम् अपि एतया पृष्ठभूमिकया चिन्तयाम । मधुरैनगरस्य पूर्वतनं नाम मधुरापुरी इति । मधुरापुर्याः राजकुमार्याः नेत्रे मीनाकारके आस्ताम् । पितुः अनन्तरं सा एव राज्ञी अभवत् । तस्याः कार्यकालः आदर्शप्रायः आसीत् । प्रतिवेशिनः राजकुमाराः बहवः तां



परिणेतुम् इष्टवन्तः । 'अस्मासु कश्चित् चित्वा तस्मै राजकुमारी शासनाधिकारं दद्यात्' इति तेषाम् अपेक्षा आसीत् । सा तत् न अङ्गीकृतवती इत्यतः ते सर्वे मधुरापुर्याः उपरि आक्रमणं कृतवन्तः । सा तान् सर्वान् सम्मुखीकृत्य युद्धं कृतवती । पराजिताः ते सर्वे पलायनं कृतवन्तः । एषा कथा 'पुरुषप्रधानभावः तस्मिन् काले अपि कथम् आसीत्' इति अंशं द्योतयति । किन्तु तथापि राजकुमारी तान् कथं धैर्येण सम्मुखीकृतवती इति विषयः अस्माभिः ज्ञातव्यः'' इति उक्तवान् ।

सन्दीपः अपृच्छत् – ''भवान् किमर्थं कथां स्थगितवान् पितामह ! किमर्थं कथा न अनुवर्त्यते ?'' इति ।

सन्दीपस्य माता – ''पुत्र ! अधिकम् अनुरोधं न करोतु । पितामहः श्रान्तः स्यात्'' इति मन्दस्वरेण उक्तवती ।

देवनाथवर्यः गाढचिन्तने मग्नः आसीत् इत्यतः मातापुत्रयोः सम्भाषणं सः न श्रुतवान् एव । किञ्चित्कालानन्तरं चिन्तनसागरतः बहिः आगतः सः परितः प्रसृतं मौनम् अवलोक्य मन्दहासं प्रकटितवान् । पुनश्च तेन कथनम् आरब्धम् –

''बह्व्यः एतादृश्यः लोककथाः सन्ति । काश्चन अत्यन्तं दुःखकर्यः । कदाचित् ताः वास्तविकं सत्यं जनान् प्रापयितुम् असमर्थाः भवन्ति इत्यतः दुःखकर्यः इति भावना भवति । उदाहरणरूपेण कोणार्कदेवालयस्य कथामेव परिशीलयाम । कोणार्कदेवालयः देवाय समर्पितः देवालयः । कलिङ्गस्य राजा नरसिंहः द्वादशशतं शिल्पिनः तन्त्रज्ञान् च अस्मिन् कार्ये नियोजितवान् । यतः देवालयः अपूर्वः स्यात् इति तस्य मतम् आसीत् । ते सर्वे तत्रैव स्थित्वा द्वादशाधिकवर्षाणि यावत् कार्यं कृतवन्तः । सहस्राधिकटन्परिमितान् भारवतः पाषाणान् कथं ते नीतवन्तः इति न ज्ञायते । यतः देवालयस्य औन्नत्यम् आसीत् २००पादपरिमितम् !!

कार्यं समाप्तप्रायम् आसीत् । कलशस्थापनमात्रम् अवशिष्टम् आसीत् । विशिष्टरूपेण कलशस्थापनं करणीयम् इति चिन्तितम् आसीत् । द्वादश वर्षाणि अतीतानि आसन् इत्यतः पूर्वं कृताः मूलरूपरेखाः तैः विस्मृताः आसन् । लिखितं पत्रकमपि न लब्धम् । अतः कलशस्थापनं कथं इति समस्या उत्पन्ना आसीत् । राजा व्याकुलचित्तः अभवत् । देवालयस्य महाशिल्पिनं विशु-महाराणानामकम् आहूय सः कठोरसूचनां दत्तवान् – ''श्वः प्रातः सूर्योदयात् पूर्वं कलशस्थापनं भवेत् । अन्यथा उग्रदण्डनं भविष्यति'' इति ।



चिन्तामग्नः विषुः कस्यचित् शिला-खण्डस्य उपरि उपविष्टवान् आसीत् । तदा कश्चन किशोरः तत्र आगतवान् । तस्य किशोरस्य मुखदर्शनेन तस्य परिचयं प्राप्य विषुः आनन्दाश्रूणि स्रावितवान् । सः किशोरः आसीत् तस्य पुत्रः धर्मपादः एव, न तु अन्यः ।

विषुः पुत्रं शैशवे एव दृष्टवान् आसीत् । तं ग्रामे एव परित्यज्य सः देवालयकार्यार्थम् आगतवान् आसीत् । पितुः ख्यातिं श्रुत्वा तस्य दर्शनेच्छया धर्मपादः तत्र आगतवान् आसीत् । सः पितुः, इतरेषां शिल्पिनां च समस्यां ज्ञातवान् । ततः स्वस्य पूर्ण समयं ताडग्रन्थानाम् अध्ययनाय विनियुक्तवान् । पूर्वतनैः शिल्पिभिः लिखितानां विषयाणां समग्रं परिशीलनं कृतवान् । रामस्यायाः समाधानं तस्य मनसि स्फुरितम् । तत् सः पितरम् अन्यशिल्पिनश्च सूचितवान् । झटिति तैः ज्ञातं यत् अस्य बालस्य कथनं समीचीनम् इति । अनुक्षणं ते प्रयत्नम् आरब्धवन्तः, बालकेन उक्तं कार्यान्वितं कृतवन्तश्च । सूर्योदयात् पूर्वं तैः कलशस्थापनकार्यं समापितम् । द्वादशशतं शिल्पिनः अपि उच्च-ध्वनिना हर्षोद्गारं कृतवन्तः । राजा सर्वेषां प्रयत्नैः सन्तुष्टः अभवत् । अन्ते तैः पारितोषिकं स्वीकृत्य स्वस्थानं गन्तव्यम् आसीत् । ते धर्मपादं परितः नृत्यम् आरब्ध-वन्तः । तम् उन्नीय तस्य गुणगानं कृतवन्तः ।

किन्तु तदा तन्मध्ये कश्चन अपस्वरः श्रुतः । कश्चित् अन्यं वदन् आसीत् – ''वयं द्वादशशतं परिणताः जनाः यत् कर्तुम् अशक्ताः तत् केनचित् बालकेन कृतम् इति ज्ञात्वा राजा अस्माकं क्षमां कुर्यात् किम् ? भविष्यत्कालेऽपि जनाः अस्मान् न उपहसेयुः किम् ?'' इति ।

दौर्भाग्यवशात् तत् वचनं धर्मपादेन श्रुतम् । सः अत्यन्तं सूक्ष्मग्राही आसीत् । 'श्वः अहम् अदृश्यः भविष्यामि चेत् कथं भवेत् ? मदनन्तरजाः केऽपि मम परिचयं न जानीयुः । एतेन सर्वं गौरवं देवालयस्य शिल्पिनः एव प्राप्स्यन्ति । अत्र बालकस्य पात्रम् अस्ति इत्यपि केऽपि न ज्ञास्यन्ति एव' इति सः चिन्तितवान् ।



पूर्णिमादिनं तत् । अतः तदा तदा सागरतरङ्गाः देवालयं प्रदक्षिणी-कुर्वन्ति स्म ।

धर्मपादः कलशस्य समीपे उपविश्य दिगन्तं पश्यन् आसीत् । अनन्तरं सः केनापि न दृष्टः । तस्य अस्तित्वं रहस्यरूपेण एव अतिष्ठत्'' इति ।

जयश्रीः उक्तवती - ''अहो, कीदृशी हृदयस्पर्शिनी कथा एषा !!'' इति ।

# आकर्षकनृत्यभङ्गी - 'ओडिस्सी'

आकर्षकभङ्गीयुक्तं नृत्यम् एव संक्षेपेण 'ओडिस्सी' इति वक्तुं शक्यम् । पुरातत्त्व-सर्वेक्षकाः भावयन्ति यत् 'ओडिस्सी'नृत्यं प्राचीनकाले भारतीयानां शास्त्रीयं नृत्यम् आसीत् इति । ओरिस्साराज्ये स्थितासु 'राज्ञी-गुम्फा'नामिकासु गुहासु अन्तर्भागे ओडिस्सी-नर्तकीनां शिल्पानि निर्मितानि सन्ति । एताः गुहाः क्रिस्तपूर्वद्विशतवर्षप्राचीनाः । एतैः शिल्पैः ज्ञायते यत् भरतमुनेः नाट्य-शास्त्रात् अपि ओडिस्सीनृत्यं प्राचीनम् इति ।

उत्तरभारतस्य प्राचीनमन्दिरेषु यदा धार्मिकाः उत्सवाः भवन्ति स्म तदा एतानि नृत्यानि प्रचलन्ति स्म इति ज्ञायते । एषः नृत्यप्रकारः सप्तमे क्रिस्तशतके तदा प्रसिद्धः अभवत्, यदा च ओरिस्सा-राज्यस्य कोणार्कनगरे स्थिते सूर्यदेवालये एतस्य नृत्यस्य सुन्दराणि शिल्पानि उत्कीर्णानि ।

षोडशशतकस्य आरम्भभागे देवालयस्य प्राङ्गणे लघुबालकाः बालिकावत् वेश-भूषणादिकं धृत्वा ओडिस्सीनृत्यं कुर्वन्ति स्म । अनन्तरम् एषा पद्धतिः 'गोतिपुवा' ('अखाड-पिला' इति नामान्तरम्) प्रसिद्धा अभवत् । सामान्यतः सर्वेषु मन्दिरेषु 'नटमन्दिर'-नामिका नृत्य-



वेदिका भवति, यत्र नृत्यभङ्गीनां शिल्पानि वादकानां शिल्पानि च भवन्ति । अधिकांशानि ओडिस्सीनृत्यानि गीतगोविन्दाधारितानि । द्वादशशतकस्य प्रसिद्धकवेः जयदेवस्य गीतगोविन्दकृतिः भक्तिगीतैः युक्ता अस्ति । गीतगोविन्दस्य गीतानि राधाकृष्णयोः अलौकिकप्रेम्णः द्योतकैः मधुरगीतैः युक्तानि सन्ति ।

स्थालिकायां नृत्यम् अपि ओडिस्सीनृत्यशैल्याः कश्चन प्रकारः । पादाभ्यां कौशलपूर्वकं स्थालिकां गृहीत्वा विशिष्टरीत्या चालयन्त्यः नर्तक्यः नर्तनं कुर्वन्ति । परिणताः नर्तक्यः कदाचित् न केवलं पादाभ्यां, हस्तयोः अपि स्थालिकां गृहीत्वा नृत्यं कुर्वन्ति । ओडिस्सीनर्तक्यः हस्तचालितवेमभिः निर्मिताः वर्णमयकौशेयशाटिकाः धरन्ति । ओरिस्साराज्ये प्रसिद्धानि स्वर्णस्य रजतस्य च आभूषणानि धरन्ति । आभूषणानि सुवर्णस्य रजतस्य वा तन्तुभिः निर्मितानि भवन्ति ।

इतरभारतीयनृत्यानि इव ओडिस्सीनृत्यस्य अपि प्रमुखभागद्वयं भवति । प्रथमं नृत्तम् । तत्र नर्तक्यः आकर्षकनृत्यभङ्गीभिः शरीरचलनैः च नृत्यं प्रस्तुवन्ति । अपरः भागः अभिनयः । तत्र मुखभावैः हस्ताभिनयैः च काञ्चित् कथां विषयं वा प्रस्तुवन्ति ताः ।

प्रतिवर्षं कोणार्कनगरे स्थिते प्रसिद्धे सूर्यदेवालये नृत्यमहोत्सवः प्रचलति । एषः उत्सवः प्रसिद्धेषु नृत्योत्सवेषु अन्यतमः ।




















# बुद्धिमान् रामकृष्णः

तेनालिरामकृष्णस्य नाम को वा न जानाति ? बालाः अपि जानन्ति । सः महाबुद्धिमान् चाटुनिपुणः च आसीत् । कृष्णदेवरायस्य आस्थाने तस्य वासः । सर्वदाऽपि महतीम् अपि समस्यां चातुर्यपूर्वक-व्यवहारेण परिहरति स्म सः ।

कदाचित् कृष्णदेवरायः रामकृष्णविषये केनचित् कारणेन नितरां कुपितः । सः कोपेन अवदत् – ''निर्गच्छतु इतः । इतःपरं कदापि भवतः मुखं द्रष्टुम् न इच्छामि'' इति ।



रामकृष्णाय ये असूयन्ति स्म ते सर्वे एतं कोपप्रसङ्गं दृष्ट्वा नितरां सन्तुष्टाः । 'रामकृष्णः इतःपरं राजास्थाने स्थानं सर्वथा न अर्हति' इति चिन्तितवन्तः ते । तथापि तेषां सन्देहः – 'रामकृष्णः केनापि उपायेन पुनरपि राजसभां प्रविशेत्' इति ।

रामकृष्णस्य दृष्ट्या तु एषः कश्चन क्षुल्लकः प्रसङ्गः । सः प्रवृत्तस्य विषये न खिन्नः, न वा चिन्ताक्रान्तः । अनन्तरदिने सः यथापूर्वं राजास्थानम् आगतवान् । मध्येमार्गम् एकं घटं क्रीत्वा आनीतवान् आसीत् सः ।





रामकृष्णः यदा राजास्थानं प्रविष्ट-वान् तदा सर्वे तम् आश्चर्येण दृष्टवन्तः । 'राज्ञः कोपः इतोऽपि न उपशान्तः । अतः राजा रामकृष्णं राज्यात् निष्कासयेत् अपि' इति तेषां चिन्तनम् आसीत् ।

रामकृष्णः तु 'किमपि न प्रवृत्तम् एव' इति भावयन् घटेन मुखम् आच्छाद्य यथापूर्वं स्वस्य आसने उपविष्टवान् ।





'राजा किं वा कुर्यात् ?' इति सर्वे प्रतीक्षमाणाः आसन् । राजा आस्थानं प्रविष्टवान् । सः रामकृष्णं दृष्ट्वा कोपेन एव अवदत् – ''भवता मुखं न प्रदर्शनीयम् इति खलु मया ह्यः आदिष्टम् ? तथापि किमर्थम् अत्र आगतं भवता ? किम् एतत् हास्यास्पदं मुखे घटधारणम् ?'' इति ।

तदा रामकृष्णः घटं धरन् एव शान्त-स्वरेण अवदत् – ''महाप्रभो ! क्षन्तव्यः अहम् । भवतः आज्ञा शिरसा धृता मया । मुखं न प्रदर्शनीयम् इति खलु भवतः आदेशः ? अतः घटेन आवृतं तत् । न आगन्तव्यम् इति तु भवता न आदिष्टम् । अतः आगतं मया'' इति । एतत् श्रुतवतः राज्ञः कोपः अपगतः । तस्य मुखे हासः उत्पन्नः । रामकृष्णस्य अपायः निवृत्तः ।



# उत्तरप्रदेशीया जानपदकथा

उत्तरप्रदेशः भारतस्थेषु राज्येषु अतिविशालतमः । २,३६,२,८६ चतुरस्र-कि. मी. विस्तारः तस्य । एतत् राज्यं २४° - ३१° अक्षांशयोः मध्ये २७° - ८४° रेखांशयोः मध्ये च अस्ति । एतत् राज्यम् आकारेण प्रान्सदेशस्य अर्धभागेन समम्, इङ्ग्लेण्ड्देशस्य समविस्तारप्रायं च अस्ति । अत्यधिकजनसङ्ख्या एतस्मिन् राज्ये । अत्र १३.२१ कोटिजनाः निवसन्ति ।

भारते प्रतिपञ्चकि.मी. भाषाभेदः प्राप्यते इति वचनं श्रूयते । उत्तरप्रदेशे समग्रे प्रायः हिन्दी एव व्यवहारभाषा ।

अत्र भाष्यमाणाः काश्चन उपभाषाः - कौर्वी, हरियानवी, व्रज, कन्नैजी, बन्देली, खडी बोली, बोस्का, अवधी, भोजपुरी, घडवाली, कुमौनी इत्यादयः ।

# महाज्योतिषिकः कश्चन ...

सावित्री काचित् ग्रामवासिनी । योग्याय वराय पुत्र्याः चमेल्याः दानानन्तरं सा इदानीं ग्रामे निश्चिन्ततया निवसति । चमेल्याः पतिः फालाक्षः स्वभावेन उत्तमः ।

चमेली पतिगृहे सुखमयं जीवनं यापयति । पुत्र्याः सुखमयं जीवनं दृष्ट्वा सावित्री अपि तृप्ता अस्ति ।

एकदा चमेली पत्या सह मातृगृहम् आगतवती । तयोः आगमनं दूरात् एव दृष्ट्वा प्रतिवेशी बालकः बालेश्वरः



धावन् आगत्य सावित्रीम् अवदत् - ''भवत्याः पुत्री जामाता च आगच्छन्तौ स्तः । तयोः ग्रामप्रवेशं दूरात् दृष्ट्वा धावन् अहम् आगतः'' इति ।

तत् श्रुत्वा सावित्री सम्भ्रमेण - ''एवम् ! वत्स ! चतुरः खलु भवान् ! मातरम् उक्त्वा चषकमितं क्षीरम् आनयतु'' इति आदिश्य चषकं दत्त्वा तं प्रेषितवती । सा इदमिदानीं स्वनिमित्तं मुद्गान्नं व्यञ्जनं च सज्जीकृत्य पाकशालातः बहिः आगता आसीत् । 'जामातुः पुत्र्याः च निमित्तं रोटिकानां सज्जीकरणम् एव उचितम्' इति विचिन्त्य सा पाकशालां गतवती ।

मातृगृहम् आगता चमेली कुशलप्रश्नानन्तरं मात्रा सह पाकशालायाम् एव उपविष्टवती । स्वागतप्रकोष्ठे एकाकितया उपविष्टः फालाक्षः किं वा कुर्यात् ? भित्तिस्थानि चित्राणि दृष्टानि तेन । स्तम्भादिषु स्थितानि ग्राम्यकाष्ठशिल्पानि अपि दृष्टानि । दुष्टशक्तीनां निवारणार्थं भित्तिषु रक्तश्वेतरेखाः समग्रे गृहे आरचिताः आसन् । ताः परिशीलयन् सः गृहस्य पृष्ठभागं गतवान् ।

तत्र सः पाकशालायां प्रचलत् सम्भाषणं श्रुतवान् । सम्भाषणविषयम् अवगत्य सः मन्दहासं प्रकटयन् स्वागतप्रकोष्ठं प्रत्यागतवान् ।

सावित्री सम्भ्रमेण कार्यं कुर्वती अल्पे एव काले पाकं सज्जीकृतवती । सा स्थालिकां स्थापयित्वा भोजनचषकान् अपि स्थापितवती । तेषु भोजनचषकेषु एकस्मिन् क्षीरम्, अपरस्मिन् सूपम्, अन्यस्मिन् व्यञ्जनं च परिवेष्य स्थालिकायां रोटिकां परिवेष्य तौ भोजनार्थं निमन्त्रितवती ।

भोजनार्थम् उपविष्टवता फालाक्षेण लक्षितं यत् स्वस्य स्थालिकायां पञ्च, पत्न्याः स्थालिकायां चतस्रः च रोटिकाः सन्ति इति ।





# आहारक्रमः





उत्तरप्रदेशे प्राधान्येन गोधूमः, द्विदलधान्यानि, इक्षुः, सर्षपः इत्यादयः वर्ध्यन्ते । यानि वर्ध्यन्ते तदनुगुणं भवति खलु तत्रत्यः आहारक्रमः ? अतः ग्रीष्मकाले तत्र निष्पावाः, भिण्डीनकानि, अन्यविधशाकाः च घृतेन सह सेव्यते प्रायेण । रोटिका, अन्नं चापि सेव्यन्ते तत्काले ।

शैत्यकाले तु आलुकं, क्यालिफ्लवर्, सर्षपपल्लवाः, सोयापर्णानि इत्यादीनि उपयुज्यन्ते । यतः तादृशानाम् एव बाहुल्येन प्राप्तिः तत्काले । रोटिका च यावानलपिष्टेन निर्मीयते । एतानि सर्वाणि शरीरे औष्ण्यम् उत्पादयन्ति । इक्षुरसनिर्मितानि पायसादिमधुराणि अपि सेव्यन्ते एतस्मिन् काले ।



पर्वदिनेषु बेसिन्-लड्डुकानि, शर्करा-पूरी, दग्धक्षीरनिर्मितानि बर्फीखाद्यानि इत्यादीनि निर्मीयन्ते प्रायः । होलीपर्वकाले लड्डुकेषु अल्पप्रमाणेन 'भङ्गाचूर्णम्' (मदजनकं किञ्चन चूर्णम्) अपि योज्यते क्वचित् । होलीपर्व यथा वर्णमयं तथैव तत्काले खाद्यानि अपि भवन्ति वर्णमयानि वैविध्यमयानि च । पूरीपिलावुप्रभृतिषु खाद्येषु तदा खादनार्हवर्णाः योज्यन्ते प्रायः ।





अतः सः श्वश्रूं पृष्टवान् – ''अम्ब ! भवती स्वनिर्मितं रोटिकाः किं न रक्षितवती ?'' इति । पाकशालायां प्रवृत्तस्य सम्भाषणस्य श्रवणात् 'नवैव रोटिकाः निर्मिताः' इति अवगतम् आसीत् तेन ।

तदा सावित्री – ''रक्षितवती एव । पात्रे सन्ति बह्व्यः रोटिकाः'' इति वदन्ती आवरणेन पिहितं रोटिकापात्रं दर्शितवती ।

''अम्ब ! किं सत्यगोपनेन ? भवत्या गोपितं चेदपि मया तत् ज्ञायते एव । अहम् अस्मि वस्तुस्थितिज्ञः ज्योतिषिकः'' इति हसन् अवदत् कालाक्षः ।

चमेली पतिम् आश्चर्येण पश्यन्ती अवदत् – ''भवान् ज्योतिषिकः खलु ? तर्हि वदतु –
अद्य मम मात्रा कति रोटिकाः
सज्जीकृताः इति'' इति ।



### *पारम्परिकी कला हस्तकौशलानि च*

उत्तरप्रदेशराज्यं कौशेयवस्त्रनिर्माणक्षेत्रे प्रसिद्धिं गतम् अस्ति । एताः कौशेयशाटिकाः बनारसनगरे मुबारकपुरप्रदेशे च वेमसु निर्मीयन्ते प्राधान्येन । मुबारकपुरम् उत्तरप्रदेशस्य 'वस्त्रनिर्माणकेन्द्रत्वेन' ख्यातम् अस्ति । शाटिकासु, अन्येषु पारम्परिकवस्तुषु च 'झरी'शलाकानां योजनं क्रियते अत्र ।



पर्वदिनेषु अत्रत्याः महिलाः भित्तिषु अङ्गणेषु च वर्णमयीः रङ्गवल्लीः लिखन्ति । रङ्गवल्ल्या स्वस्तिकं, कमलम् इत्यादीन् आकारान् रचयन्ति ताः । होलीपर्वकाले विविधैः वर्णमयचूर्णैः, दीपावलीकाले गोधूमपिष्टेन, अन्येषु उत्सवेषु तण्डुलपिष्टेन च एतादृश्यः विविधाकारिकाः रङ्गवल्ल्यः रच्यन्ते प्रायः ।

फालाक्षः नेत्रे निमील्य मन्त्रं जपन् इव ओष्ठे सञ्चाल्य पुनः नेत्रे उद्घाट्य अवदत् - ''नव रोटिकाः'' इति ।

चमेली रोटिपात्रस्य आवरणम् अपनीय दृढीकृतवती यत् तत्र रोटिकाः न सन्ति इति । तावता सावित्री उक्तवती - ''अहम् अन्नं खादिष्यामि । अलं तद्विषये चिन्तनेन । शीतलीभवनात् पूर्वं रोटिका सेव्यताम्'' इति ।

ततः द्वित्रघण्टाभ्यन्तरे समग्रे ग्रामे वार्ता प्रसृता यत् सावित्र्याः भगिन्याः जामाता वस्तुस्थितिकथने सुनिपुणः इति ।

अनन्तरदिने भोजनानन्तरं सावित्री चमेली च पाकवस्तुसज्जीकरणे निमग्ने आस्ताम् । फालाक्षः मञ्चस्य उपरि शयानः आसीत् । तदा तद्ग्रामीणः रजकः कालरामः सावित्री-



समीपम् आगत्य अपृच्छत् - ''आर्ये ! मम गर्दभः क्व गतः इति न ज्ञायते । किं भवत्याः जामाता वक्तुं शक्नुयात् यत् सः कुत्र स्यात् इति ?'' इति ।

सावित्री जामातरम् उत्थाप्य पृष्टवती । किम् उत्तरं दद्यात् फालाक्षः ? सः नेत्रे निमील्य - 'घर्मकाले गर्दभाः कुत्र वा गच्छेयुः ? यत्र शीतलपरिसरः तृणानि च भवन्ति तत्रैव गताः स्युः ते' इति विचिन्त्य अवदत् - ''भवतः गर्दभः राजसुखम् इच्छति इति भाति । सः राजोद्यानं गतः स्यात्'' इति ।

कालरामः राजोद्यानं गतवान् । तत्र तदीयः गर्दभः कस्यचित् वृक्षस्य च्छायायां शयानः सुखेन रोमन्थनं कुर्वन् आसीत् । कालरामः गर्दभस्य प्राप्त्या नितरां सन्तुष्टः । ततः दिनाभ्यन्तरे फालाक्षस्य कीर्तिः सर्वत्र प्रसृता ।

तस्मिन् दिने सायङ्काले फालाक्षः गुडमिश्रितं तक्रं यदा पिबन् आसीत् तदा तस्य देशस्य सेनापतिः शूरसिंहः आगत्य अवदत् - ''मम

## उत्सवः

चैत्रमासे, तन्नाम एप्रिल्मासे, उत्तरप्रदेशीयाः नवरात्रोत्सवम् आचरन्ति । दुर्गादेवी तदा पूज्यते तैः । मध्यरात्रे तां सम्पूज्य विविधानि खाद्यानि नैवेद्यरूपेण अर्पयन्ति जनाः । एषा पूजा 'बासियोरा' इति निर्दिश्यते । दुर्गायाः सप्त रूपाणि परिकल्प्य एकैकस्मिन् दिने एकैकस्य रूपस्य पूजां कृत्वा बहुविधखाद्यानि नैवेद्यरूपेण अर्प्यन्ते कैश्चित् । सर्वेषां गृहेषु तण्डुलपिष्टेन निर्मितया रङ्गवल्ल्या अलङ्कारः क्रियते ।



अश्वः अदृश्यतां गतः अस्ति । कुत्र स्यात् सः ?'' इति ।

'एषः मम परीक्षाकालः । किम् अहं करवाणि ?' इति चिन्तयन् फालाक्षः स्वगतम् अवदत् - 'कासारः शरणम् इदानीम्' इति ।

'कासारे मम निमज्जनम् एव वरम्' इति फालाक्षस्य वचनस्य तात्पर्यम् आसीत् । किन्तु प्रवृत्तं तु अन्यत् एव । सेनापतेः अश्वः कासारसमीपे लब्धः । सन्तुष्टः सेनापतिः शतं सुवर्णनाणकानि दत्तवान् फालाक्षाय ।

'जनाः इदानीं मां वस्तुतः अपि वस्तुस्थितिज्ञं ज्योतिषिकं मन्यन्ते । यावत् सत्यं बहिः न आगच्छेत् ततः पूर्वं मया इतः निर्गन्तव्यम्' इति फालाक्षस्य चिन्तनम् । अतः सः - 'अद्यैव इतः निर्गच्छाव' इति पत्नीम् उक्तवान् । किन्तु चमेली उक्तवती - ''मया मातृगृहे इतोऽपि कानिचन दिनानि स्थातव्यम् एव'' इति ।

अनन्तरदिने राजगृहतः आगतः कश्चन भटः उक्तवान् - ''फालाक्षवर्य ! अस्माकं राज्ञ्याः कनकलतावर्यायाः कनकहारः न दृश्यते । भवता एव साहाय्यं करणीयम् इदानीम्'' इति ।

'राजगृहस्य व्यवहारः एषः । निराकर्तुं सर्वथा न शक्यते । किन्तु यदि अङ्गीक्रियते तर्हि असाफल्यं प्राप्तं चेत् कारागारवासः अपि सम्भवेत् । किम् अहं करवाणि ?' इति चिन्तयन् फालाक्षः भटं पृष्टवान् - ''महाराज्ञी कनकहारं कुत्र स्थापितवती आसीत् ?'' इति ।

''शय्यायाः पार्श्वे एव । निद्रातः पूर्वम् अन्यहारैः सह सा एतं हारम् अपि स्थापितवती आसीत् । निद्रातः उत्थानसमये तु अयम् एकः एव हारः न दृश्यते स्म'' इति विवरणम् उक्तवान् भटः ।

''एवम् ! निद्रादेवी एव अत्र दोषिणी'' इति उक्तवान् फालाक्षः । 'राज्ञ्याः निद्राकाले एतत् प्रवृत्तम् इत्यतः निद्रादेवी एव अत्र दोषकर्त्री' इति तस्य आशयः आसीत् ।

किन्तु राजभटः एतत् श्रुत्वा - ''मया अपि चिन्तितम् आसीत् यत् वृद्धदास्या देव्या एव एतत् कृतं स्यात् इति'' इति वदन् ततः निर्गतवान् । वृद्धदास्याः देव्याः विचारणा कृता । वस्तुतः सा एव हारस्य अपहर्त्री आसीत् । सा स्वस्य दोषम् अङ्गीकृतवती ।

'देवो दयालुः !' इति दीर्घं निश्श्वस्य फालाक्षः यावत् तस्मात् ग्रामात् निर्गन्तुम् उद्युक्तः तावता कश्चन राजभटः आगत्य उक्तवान् - ''महाराजः भवन्तं द्रष्टुम् इच्छति'' इति । राजाज्ञा

खलु अनुल्लङ्घनीया ? अतः फालाक्षः विना प्रतिवचनं राजधानीं गतवान् ।

राजा दिग्विजयसिंहः गाम्भीर्येण अवदत् - ''भवतः विषये मया बहुधा श्रुतम् । अतः अहं भवतः योग्यतां परीक्षितुम् इच्छामि । यदि भवान् मम परीक्षायाम् उत्तीर्णः भवेत् तर्हि अहं भवन्तं भूखण्डप्रमुखं कुर्याम् । यदि अनुत्तीर्णः भवेत् तर्हि मुण्डयित्वा मुखे कृष्णवर्णलेपनं कारयित्वा गर्दभस्य उपरि उपवेश्य यात्रा कार्यते'' इति ।

फालाक्षः उत्तरं किमपि न उक्तवान् । राजा अपृच्छत् - ''मम मुष्टौ किम् अस्ति ?'' इति ।

फालाक्षः भीत्या एव अवदत् - ''भीतस्य जीविनः प्राणधारणं भवतः हस्तम् अवलम्बते'' इति । तन्नाम 'भीतस्य मम मरणं जीवनं वा भवदधीनम् अस्ति' इति फालाक्षस्य कथनस्य तात्पर्यम् आसीत् ।

राजा हसन् मुष्टिम् उद्घाटितवान् । तत्र कश्चन खद्योतः आसीत् । तं त्यजन् राजा अवदत् - ''भवान् वस्तुतः अपि महाज्योतिषिकः एव । तस्य जीविनः प्राणधारणं मम मुष्टिम् अवलम्बते स्म । भवान् इतःपरं विशालस्य भूखण्डस्य स्वामी भविष्यति'' इति ।



फालाक्षः सुदूरस्थस्य भूखण्डस्य स्वामित्वम् अभ्यर्थितवान् । राजा एतत् अङ्गीकृतवान् । सुदूरस्थे ग्रामे कोऽपि तस्य महाज्योतिषिकत्वकीर्तिं न जानाति स्म । तदर्थं तं कोऽपि न पीडयति स्म - 'ज्योतिषं वदतु' इति । अतः फालाक्षः तत्र पत्न्या श्वश्र्वा च सह सुखेन जीवितवान् । - अलका राय्

# दर्शनीयानि स्थलानि

सांस्कृतिकतया ऐतिहासिकतया च उत्तरप्रदेशस्य विशेषमहत्त्वम् अस्ति ।

भारतस्य उभे प्रमुखे नद्यौ गङ्गा यमुने च एतस्मिन् राज्ये प्रवहतः । अयोध्या, बृन्दावनं, मथुरा इत्यादीनि प्रमुखनगराणि अत्र सन्ति, यानि च इतिहासप्रसिद्धयोः रामकृष्णयोः जीवनेन सम्बद्धानि सन्ति । गङ्गातीरे स्थितं वाराणसी-नगरं तीर्थक्षेत्रत्वेन पाण्डित्य-निलयत्वेन च प्रसिद्धम् अस्ति ।

नवसु अत्याश्चर्यकरेषु विषयेषु अन्यतमं ताजभवनम् अस्मिन् एव राज्ये 'आगरा'नगरे अस्ति, यच्च शहजहानराजः स्वस्य पत्न्याः मुमताझायाः निमित्तं निर्मापितवान् ।

किं भवद्भ्यः नदीविहारः रोचते ? तर्हि हृषीकेशे भवन्तः वेगेन प्रवहन्त्यां गङ्गायां नौकां चालयितुम् अर्हन्ति । अथवा जले कूर्दनं किं रोचते ? तर्हि अत्र तदपि शक्यम् । तेन धमनिषु रक्तसञ्चारः भवति आनन्दतरङ्गेण सह ! अथवा शान्ततया विहारं कर्तुम् इच्छन्ति भवन्तः ? तर्हि आगच्छन्तु - काबेंट्राष्ट्रियोद्यानम् । हरितमयः परिसरः भवतः सर्वान् स्वागतीकरोति ।

# वार्ताविशेषाः

## क्रिकेट्क्षेत्रे रशियन्देशीयः

अन्येषु बहुषु देशेषु इव रशियादेशे अपि क्रिकेट् न क्रीड्यते । अतः एव तत्र क्रिकेट्क्रीडापटवः न उपलभ्यन्ते । अलेक्से कोरोबकिन् एतस्य अपवादत्वेन तिष्ठति । सेण्ट् पीटर्सबर्गीयः अयं सप्तदशवर्षीयः विद्यार्थी इदानीं केण्ट्नगरे डोवर्महाविद्यालये पठति । सः तस्य महाविद्यालयगणस्य कन्दुकक्षेपकेषु अग्रणीः । (तेन ५९ क्षेपणषट्केषु १३ क्रीडापटवः बाह्यीकृताः द्विसहस्रतमे वर्षे कदाचित् ।) एषु दिनेषु केण्ट्नगरे 'xi क्लब्'गणं विरुध्य या स्पर्धा प्रवृत्ता तस्यां तेन २४ धावनाङ्कान् यच्छता ६ क्रीडापटवः बाह्यीकृताः) 'विड्सन् अल्मानक्'संस्थया एतस्य वर्षस्य विशिष्टविद्यार्थित्वेन एषः परिगणितः । क्रिकेट्क्षेत्रे ऐदम्प्राथम्येन रशियन्जनस्य नाम योजयन् सः वदति यत् महाविद्यालयीयं विद्याभ्यासं समाप्य अहं रशियादेशे क्रिकेट्क्रीडनपरम्परायाः आरम्भं करिष्यामि इति ।



## चिह्नं चितम्...



अग्रिमेषु द्वादश वर्षेषु पादकन्दुकप्रियाणां जिह्वासु त्रीणि नामानि विलसिष्यन्ति । तानि च – निक्, काझ्, अटो चेति । अग्रिममेमासस्य ३१ दिनाङ्कतः जून्मासस्य ३० दिनाङ्कपर्यन्तं प्रचलिष्यमाणायाः विश्वस्तरीयपादकन्दुकस्पर्धायाः चिह्नत्वेन चितानां नामानि तानि । प्रपञ्चे सर्वैः विविधानि नामानि सूचितानि । अन्ते 'फिफा'संस्थया एतानि त्रीणि नामानि चितानि । शृङ्गयुक्ताः एते अन्यग्रहात् आगताः इव भान्ति । चिह्नस्थः वर्णः च पीतः, नीलः, नीलहरितः च ।

## महाधनिकः क्रिकेट्पटुः



क्रिकेट्पटुषु महाधनिकः कः स्यात् ? किम् इंग्लेण्डदेशीयः, उत आस्ट्रेलिया-जातः, उताहो वेस्ट्-इण्डीसीयः, उत वा दक्षिणाफ्रिकीयः ? न सः अन्यदेशीयः अपि तु भारतीयः एव । तस्य नाम - 'सचिन् तण्डूल्कर्' इति । तं महाधनिकं कृतवती न क्रिकेट्क्रीडा, अपि तु रूपदर्शिता !! एषु दिनेषु विश्वदूरदर्शनसंस्थायाः सन्धिपत्रे हस्ताङ्कनं कृतवान् सः अशीतिकोटि-रूप्यकाणाम् अधिपतिः जातः । एतावत् धनं शेन्वान्, ब्रियान् लारा वा न प्राप्नोति । पूर्वं सः २४ कोटिरूप्यकाणि प्राप्नोति स्म । इतःपरं तया संस्थया प्रकाश्यमानासु सर्वासु विज्ञापिकासु तण्डूलकरः दृष्टिगोचरः भविष्यति । क्रिकेट्क्षेत्रे सचिनस्य विशेषसिद्धिम् अनुलक्ष्य तया संस्थया एतावतः धनस्य दानम् अङ्गीकृतम् अस्ति ।

## परिवारीया हाकिस्पर्धा

हाकीक्षेत्रीया निके नेलमक्कडाचषकप्रशस्तिः किं भवद्भिः श्रुतपूर्वा ? न स्यात् खलु ? इतःपरं बहुधा श्रोष्यन्ति भवन्तः । यतः एतत् नाम गिन्नीस्पुस्तके उल्लिखितम् अस्ति ।



गृहसदस्यानां गणानां कृते एषु दिनेषु कर्णाटके अम्मथिप्रदेशे एका विशिष्टा हाकीस्पर्धा आयोजिता आसीत् । एतस्यां स्पर्धायां २२६ परिवारीयाः भागम् अवहन् । मेमासस्य १३ दिनाङ्के प्रवृत्तायाम् अन्तिमस्पर्धायां कूर्तण्डापरिवारीयाः चप्पुडिरापरिवारीयगणं ३:१ अङ्कैः पराजितवन्तः गिन्नीस्संस्थायाः प्रतिनिधयः आन्तम् एतां स्पर्धाकार्यक्रमं परिवीक्षितवन्तः ।




# काशवसना सुन्दरी

पूर्वं कदाचित् युरोपखण्डस्य दक्षिणे भूभागे कश्चन धनिकः निवसति स्म । सः विशालस्य कृषिक्षेत्रस्य, बहूनां सौधानां च स्वामी आसीत् । तस्य तिस्रः पुत्र्यः आसन् ।

एकदा सः ज्येष्ठपुत्रीं पृष्टवान् - ''मयि भवत्याः प्रीतिः कियती ?'' इति ।

''अतिमहती प्रीतिः मम । यावत् आत्मनि तावत्'' इति उक्तवती ज्येष्ठपुत्री ।

एतत् श्रुत्वा पिता सन्तोषेण उक्तवान् - ''भवती योग्या पुत्री मम'' इति ।

ततः सः द्वितीयां पुत्रीं पृष्टवान् - ''पितरि कियती प्रीतिः अस्ति भवत्याः?'' इति ।

''मम पितरि तावती प्रीतिः, यावच्च अन्यस्मिन् कस्मिंश्चित् अपि नास्ति'' इति उक्तवती द्वितीयपुत्री ।

एतत् अपि उत्तरं तस्य महते सन्तोषाय जातम् ।

सः तृतीयां पुत्रीं पश्यन् अपृच्छत् - ''वत्से ! पितरि मयि भवत्याः कियती प्रीतिः ?'' इति ।

एषा अपि अग्रजे इव 'महती प्रीतिः' इत्येव वदेत् इति चिन्तनम् आसीत् धनिकस्य ।

किन्तु तृतीया पुत्री उक्तवती - ''पाकलवणयोः यावती प्रीतिः तावती एव प्रीतिः भवति अस्ति मम'' इति ।

एतत् धनिकस्य सन्तोषाय न जातम् । 'भवान् लवणसदृशः क्षुल्लकः इति एषा वदन्ती अस्ति' इति चिन्तयन् सः नितरां कुपितः । सः क्रोधेन - ''अये दुष्टे ! मया यस्यै प्रीत्या क्षीरं

दत्तं सा सर्पकुलीय जाता। धिक् भवतीम्। मयि अल्पा अपि प्रीतिः नास्ति भवत्याः। अन्यच्च, मां लवणतुल्यं वदन्ती भवती मम अपमाननम् अपि कृतवती। एतादृशी भवती इतःपरं मम गृहे न भवेत्। निर्गच्छतु इतः। इदानीम् एव निर्गच्छतु। पुनः मुखं मा दर्शयतु'' इति तर्जयन् तां गृहात् निष्कासितवान् एव।

अनन्यगतिका सा गृहात् निर्गतवती। शैत्यं सहमानया गच्छन्त्या तया एकत्र एकं काश-तृणमयं क्षेत्रं प्राप्तम्। तैः तृणैः एकं दीर्घं निचोलं निर्माय तत् धृत्वा सा स्वस्य अमूल्यं वस्त्रं गोपितवती। अनन्तरं सा ततः निर्गत्य एकं महासौधं प्राप्तवती।

तस्य महासौधस्य पृष्ठद्वारं ताडयन्ती सा पृष्टवती - ''किम् अत्र सेविकोद्योगः लभ्येत?'' इति।

द्वारम् उद्घाटितवती पाचिका ''न'' इति कठोरस्वरेण उक्तवती।

''अनाथा अस्मि अहम्। सर्वविधकार्याणि अपि कर्तुं समर्था अस्मि। आहारः वासः च दत्तः चेत् पर्याप्तम्। वेतनं किमपि मास्तु मम'' इति दैन्येन उक्तवती सा तरुणी।

''अस्तु। अत्रैव वसतु भवती। पात्रक्षालनं मार्जनम् इत्यादिकं करणीयं भवत्या'' इति आदिश्य वासार्थम् अवकाशं दत्तवती पाचिका। अन्यसेविकाभिः सह एव तया वासः आरब्धः। तया स्वनाम न उक्तम्। अतः 'काशवसना' इति तां निर्दिष्टवत्यः अन्याः।

एकदा तस्य सौधस्य पार्श्वे महान् नृत्य-कार्यक्रमः निश्चितः। सर्वाभ्यः सेविकाभ्यः विरामः दत्तः नृत्यदर्शनार्थम्। सर्वाः नूतन-वस्त्राणि धृत्वा नृत्यार्थं प्रस्थितवत्यः। किन्तु काशवसना तु - ''निरन्तरकार्येण अहं श्रान्ता अस्मि। अतः अहं गृहे एव स्थास्यामि'' इति उक्त्वा अन्याः प्रेषितवती। यदा सर्वाः गताः तदा सा स्नात्वा अमूल्यवस्त्रं धृत्वा नृत्यस्थलं गतवती। तत्र तत्सदृशी सुन्दरी, अमूल्यवस्त्र-धारिणी अन्या काऽपि न आसीत्।

तस्याः स्वामिन्याः पुत्रः दर्शनमात्रेण तस्याम् अनुरागवान् जातः। सः तया सहैव नृत्यं कृतवान्। कार्यक्रमस्य समाप्तिः यदा आसन्ना तदा काशवसना मन्दं ततः निर्गत्य स्ववासस्थानं प्राप्तवती। सामान्यवेषं धृत्वा शयनस्य अभिनयं कृतवती च।

अनन्तरदिने प्रातः सा अन्याः पृष्टवती - ''नृत्यकार्यक्रमः कथम् आसीत्?'' इति।

''अहो, अपूर्वः! भवती तस्य दर्शनभाग्यात् वञ्चिता जाता। काचित् परमसुन्दरी अमूल्यवस्त्रं धृत्वा तत्र आगता आसीत्। तस्यां लग्ना अस्माकं स्वामिनः पुत्रस्य दृष्टिः तु अन्यत्र न गता एव'' इति उक्तवत्यः ताः।

''मया अपि द्रष्टव्या आसीत् सा'' इति विषादेन उक्तवती काशवसना।



"अद्य रात्रौ अपि पुनरपि नृत्यकार्यक्रमः प्रवर्तिष्यते। सा अद्यापि आगच्छेत्। सा कुतः आगता, कुत्र गता इति कोऽपि न जानाति" इति उक्तवत्यः अन्याः सेविकाः।

एतस्मिन् अपि दिने काशवसना श्रान्ति-व्याजम् उक्त्वा गमनं निराकृतवती। सर्वासां निर्गमनानन्तरं स्नात्वा अमूल्यवस्त्रं धृत्वा नृत्यस्थानं गतवती। स्वामिनः पुत्रः तस्याः एव आगमनं निरीक्षमाणः आसीत्। तया सह आतृप्ति नृत्यं कृतवान् सः। एतस्मिन् अपि दिने नृत्यसमाप्तितः पूर्वं मन्दगत्या ततः निर्गत्य स्वस्थानं गत्वा काशवस्त्रं धृत्वा शयनं कृतवती सा।

"नृत्यम् अदृष्टवती भवती निश्चयेन हतभाग्या एव। सा परमसुन्दरी अद्यापि आगता आसीत्। अस्माकं स्वामिनः पुत्रः तु तया सहैव नृत्यं कृतवान् आकार्यक्रमम्" इति उक्तवत्यः दास्यः।



अनन्तरदिने अपि एवम् एव प्रवृत्तम्। तया सह नृत्यं कुर्वन् स्वामिनः पुत्रः तस्याः नाम-वासस्थलादिकं पृष्टवान्। किन्तु मन्दहासः एव तस्याः उत्तरम् आसीत्। अन्ते स्वामिनः पुत्रः तस्याः अङ्गुल्याम् अङ्गुलीयकम् एकं धारयित्वा कर्णे अवदत् - "भवत्याः दर्शनं यदि न भवेत् तर्हि अहं मरणं प्राप्नुयाम्" इति। नृत्यस्यान्ते सा यथापूर्वं मन्दगत्या निर्गत्य स्वस्थानं प्राप्तवती।

स्वामिनः पुत्रः सप्ताहं यावत् तस्याः अन्वेषणं कृतवान्। किन्तु सा न दृष्टा तेन। तस्याः नाम अपि कोऽपि न जानाति स्म। ताम् एव स्मरन् सः ज्वरग्रस्तः सन् शय्याम् आश्रितवान्।

"मम पुत्रः तीव्रम् अस्वस्थः अस्ति। तस्मै किञ्चित् यवागूं सज्जीकरोतु" इति पाचिकाम् आदिष्टवती स्वामिनी।

यावत् पाचिका पाकशालां प्रविष्टवती तावता तत्र गता काशवसना - "अहं यवागूं सज्जीकरिष्यामि। सर्वरोगनिवारिकायाः यवाग्वाः सज्जीकरणक्रमं मम पितामही मां बोधितवती अस्ति" इति उक्त्वा यवागू-सज्जीकरणे उद्युक्ता अभवत्।

उत्तमां यवागूं सज्जीकृत्य स्वच्छे पात्रे स्थापयित्वा तस्मिन् स्वामिपुत्रेण दत्तम् अङ्गुलीयकं पातयित्वा तत् पात्रं स्वामिपुत्रस्य प्रकोष्ठं प्रति प्रेषितवती काशवसना।

स्वामिपुत्रः यवागूं पीतवान्। पात्रतले तेन अङ्गुलीयकं प्राप्तम्। सः उच्चस्वरेण पाचिकाम् आहूय अपृच्छत् - "यवागूः कया सज्जीकृता ?" इति।

भीतिमिश्रितस्वरेण अपृच्छत् पाचिका - "मयैव श्रीमन् ! किं तत्र कोऽपि दोषः लक्षितः?" इति।

"न। न भवत्या सज्जीकृतम् एतत्। सत्यं वदतु - कया निर्मितम् एतत् ? सत्यकथनतः न कोऽपि अपायः भवत्याः" इति अवदत् स्वामिपुत्रः।

"एतत् काशवसनया सज्जीकृतम्" इति भीत्या एव उक्तवती पाचिका।

"ताम् अत्र प्रेषयतु" इति आदिष्टवान् स्वामिपुत्रः।

काशवसना तत्समीपम् आगता। स्वामिपुत्रः ताम् अपृच्छत् - "एतत् अङ्गुलीयकं कथं प्राप्तं भवत्या ?" इति।

"यः मह्यं तत् दत्तवान् तस्मात्" इति उक्तवती सा।

"एवं तर्हि भवती का ?" - अपृच्छत् सः।

"क्षणं तिष्ठतु। एषाऽहम् आगच्छामि" इति उक्त्वा ततः गता सा स्वच्छीभूय अमूल्यवस्त्राणि धृत्वा आगतवती।

'मया प्रतीक्षिता एषा एव" इति अभिज्ञातवान् स्वामिपुत्रः झटिति शय्यातः उत्थाय तस्याः हस्तौ गृहीतवान्। ततः सः घोषितवान् यत् एताम् एव अहं परिणेष्यामि इति।

काशवसनायाः पिता विवाहार्थं निमन्त्रितः। किन्तु काशवसना का इति तु कोऽपि न जानाति स्म।

विवाहदिने सा पाकशालां गत्वा उक्तवती - "अद्य सर्वोऽपि पाकः लवणरहितत्वेन सज्जीकरणीयः" इति।

"तदा पाकः अरुचिकरः भविष्यति" इति उक्तवान् पाचकप्रमुखः।

"अलं चिन्तया। मया यथा आदिष्टं तथा करोतु" इति उक्तवती काशवसना।

विवाहः समाप्तः। निमन्त्रिताः सर्वे भोजनार्थम् उपविष्टवन्तः। किन्तु केनापि किमपि खादितुं न शक्तम्। सर्वम् अपि



रुचिहीनम्। काशवसना अवगुण्ठनं किञ्चित् अपसार्य पितरं पश्यन्ती आसीत्। तस्याः पिता सर्वेषु पाकपदार्थेषु लवणराहित्यं दृष्ट्वा अश्रुपूर्णनेत्रः जातः।

"किं जातं श्रीमन् ? किं पाकस्य लवणराहित्यं भवन्तं तीव्रतया अबाधत ?" इति पृष्टवान् स्वामिपुत्रः।

"अहो दुर्विधिः! सा च काचित् दीर्घा कथा। ममापि काचित् पुत्री आसीत्। 'मयि भवत्याः प्रीतिः कियती ?' इति मया पृष्टा सा उक्तवती आसीत् - 'पाकलवणयोः यावत् तावत्' इति। तस्याः वचनस्य तात्पर्यं न अवगतं मया तत्काले। मयि विशेषतः प्रीतिमतीम् अपि तां गृहात् बहिष्कृतवान् पापी अहम्। धिक् माम्। वराकी सा इदानीं परलोकं श्रितवती स्यात्" इति दुःखेन उक्तवान् धनिकः।

काशवसना स्वस्य अवगुण्ठनं क्षिप्त्वा तस्य पुरतः उपस्थाय - "तात ! सा एव अहम्" इति वदन्ती तं नमस्कृत्य प्रीत्या आलिङ्गितवती।

ततः सा पितुः आशीर्वादं प्राप्य पत्या सह सुखेन जीवितवती। - उमारमणन्

# भारतम् अवगम्यताम्

## प्रश्नोत्तरम्

अगस्ट्मासस्य १५ दिनाङ्कः स्वातन्त्र्यसङ्ग्रामगाथां स्मारयति । स च सङ्ग्रामः शताधिकवर्षाणि प्रवृत्तः । ५४ वर्षेभ्यः पूर्वं सः समाप्तिं गतः, यस्य च परिणामतः भारतं स्वतन्त्रं जातम् । एतस्य मासस्य प्रश्नाः स्वातन्त्र्यसङ्ग्रामस्य विविधाः घटनाः, स्वातन्त्र्यार्थं प्राणान् पणीकृतवतां साहसगाथाः च स्मारयन्ति ।

१. कस्य भारतीयसैन्यदलस्य सैनिकाः १८५७ तमे वर्षे ऐदम्प्राथम्येन आङ्ग्लविरोधम् आचरितवन्तः ?
२. भारतीयराष्ट्रियकाङ्ग्रेस्संस्था केन संस्थापिता ?
३. काङ्ग्रेस्संस्थायाः प्रथमस्य अधिवेशनस्य आध्यक्ष्यं कः कदा निरूढवान् ?
४. अमेरिकादेशे 'गद्दर्'पक्षं कः संस्थापितवान् ?
५. त्रिसहस्राधिकाः कृषिकाः काङ्ग्रेस्पक्षस्य अङ्गतया यदा चौरीचौराप्रदेशे शोभायात्रां कुर्वन्तः आसन् तदा आङ्ग्लेयाः आरक्षकाः यत् गोलकास्त्रप्रयोगं कृतवन्तः तस्य परिणामतः आरक्षकस्थानकं दग्धं जातम् । कदा एतत् प्रवृत्तम् ? चौरीचौरा च कुत्र अस्ति ?
६. जलियन्वालाबाग्दुर्घटना कस्मिन् दिनाङ्के प्रवृत्ता ?
७. तरुणेषु राष्ट्रभक्तिम् उद्दीपयितुं कः १८९५ तमे वर्षे शिवाजीपर्वाचरणस्य आरम्भं कृतवान् ?
८. कस्मिन् वर्षे गान्धिवर्यः स्वदेशस्य, स्वजनानां च सेवार्थं दक्षिणाफ्रिकातः भारतम् आगतवान् ?
९. १९१५ तमे वर्षे बलासोर्नगरे कः क्रान्तिकारी आरक्षकान् विरुध्य युद्धं कुर्वन् प्राणार्पणं कृतवान् ?
१०. लण्डन्नगरे भारतनायक-ब्रिटिश्शासकयोः वृत्तोत्पीठिकापरिषत् त्रिवारं प्रवृत्तम् । उभौ नायकौ एतेषु त्रिषु अपि अधिवेशनेषु भागं गृहीतवन्तौ । तौ कौ ?
११. 'इन्क्विलाब् जिन्दाबाद्' इति घोषणा केन आरब्धा ?
१२. भारतीयराष्ट्रियसैन्यं कदा कुत्र आरब्धम् ?

*(उत्तराणि अग्रिमे मासे)*

## 'जुलै' प्रश्नावल्याः उत्तराणि

१. गङ्गा ।
२. झेलम् ।
३. के २ ।
४. काञ्चनजुङ्गा ।
५. ३३ %
६. हरियानाराज्ये ।
७. १८७३ तमे वर्षे ।
८. गुजरात्राज्ये । पक्षिधाम द्रष्टुं शक्यम् ।
९. १७७४ तमे वर्षे, 'राणिगञ्ज' इत्यत्र ।
१०. चतुर्थम् ।
११. 'मैका'नामकम् ।
१२. दिल्लीनगरम् ।
१३. राजस्थानराज्ये ।
१४. महानदीम् अवलम्ब्य ।
१५. १८७१ तमे वर्षे ।

## ६५. यादवानां विनाशः

# महाभारतम्

परेद्यवि साम्बस्य गर्भतः मुसलस्य जन्म अभवत् । तत् दृष्ट्वा कृष्णः - ''मुसलं चूर्णीकृत्य समुद्रे योजयन्तु'' इति यादवान् आदिश्य उद्घुष्टवान् - 'केनाऽपि मदिरापानं न करणीयम् । कृतं चेत् तस्य मरणदण्डनं विधास्यते' इति ।

अतः वृष्णिवंशीयाः अन्धकवंशीयाः 'त्र अत्यन्तं जागरूकाः आसन् । तथापि सर्वैः पुनः पुनः अपशकुनानि अनुभूतानि । सर्वत्र मूषकाणां सङ्ख्यायां वर्धनम् अभवत् । यादवेषु अकृत्यकरणप्रवृत्तिः आरब्धा । ज्येष्ठानां विषये आदरः न्यूनः जातः । पतिपत्न्योः परस्परं निन्दनम् आरब्धम् । भोजने कीटाः एव दृश्यन्ते स्म । एतादृशानि अपशकुनानि महाभारतयुद्धात् पूर्वम् अपि अभवन् । 'एतानि अपशकुनानि जनानां क्षयस्य सूचनां यच्छन्ति' इति स्मरन् कृष्णः सङ्कल्पं कृतवान् यत् सर्वे यादवाः तीर्थयात्रां प्रति नेतव्याः इति ।

तीर्थयात्रायाः सज्जता अभवत् । गजान्, रथान् च आरुह्य यादवाः समुद्रतीरं प्राप्तवन्तः । सर्वे तत्र शिबिराणि निर्माय वासस्य प्रबन्धं कृतवन्तः । अनतिदूरे एव प्रभासक्षेत्रम् आसीत् ।





वृष्णिवंशीयः उद्धवः श्रीकृष्णस्य प्रियसखः आसीत् । सः सर्वान् यादवान् समुद्रतीरसमीपं नीतवान् । तत्र ते सर्वे उच्चस्वरेण कोलाहलं कुर्वन्तः यथेच्छं मदिरां पीतवन्तः । तदा कृष्णबलरामौ अपि इतरैः सह मदिरापानं कृतवन्तौ ।

पानमत्तः युयुधानः कृतवर्माणम् उद्दिश्य - ''भवान् शयानानां पाण्डवानां वधं छलेन कृतवान् । किन्तु कोऽपि यादवः एतादृशं दुष्कृत्यं कर्तुं न अर्हति'' इति निन्दितवान् ।

एतं विषयम् अधिकृत्य उभौ अपि परस्परदूषणम् आरब्धवन्तौ । तयोः कलहे भागं वहन्तः यादवाः पानपात्रं स्वीकृत्य परस्परं लक्ष्यीकृत्य क्षेपणम् आरब्धवन्तः । एवम् एकस्य एव वंशस्य जनाः अकारणं कलहम् आरब्धवन्तः । सर्वेषु पश्यत्सु प्रद्युम्नः भोजवंशीयानाम् उपरि आक्रमणं कृतवान् । भोजवंशीयाः सात्यकेः प्रद्युम्नस्य च उपरि आक्रमणं कृतवन्तः । तस्मिन् युद्धे द्वौ अपि मारितौ अभवताम् । एतेन कृष्णः कुपितः अभवत् । सः मुष्टिमितं तृणम् उत्पाट्य कांश्चन हतवान् । आश्चर्यं नाम तस्य तृणस्य मुसलबलम् आसीत् । सर्वे ततः एव तृणम् उत्पाट्य परस्परं हननम् आरब्धवन्तः । सर्वेऽपि उन्मत्ताः इव व्यवहरन्ति स्म । तदा पित्रा पुत्रः मारितः । पुत्रेण च पिता । स्वपरभेदः सर्वैः विस्मृतः आसीत् ।

स्वस्य पुत्राणां पौत्राणां च हननं दृष्ट्वा कुपितः कृष्णः असहनया अवशिष्टान् सर्वान् हतवान् । तदा कृष्णस्य सारथिः दारुकः, बभ्रुश्च कृष्णम् उक्तवन्तौ - ''भगवन् ! अस्मिन् कलहे सर्वेऽपि मारिताः अभवन् । वयं गत्वा बलरामम् अन्विष्याम । सः कुत्र अस्ति इति न ज्ञायते'' इति ।

ते त्रयः अपि बलरामम् अन्वेष्टुं गतवन्तः । अन्ते कस्यचित् वृक्षस्य अधः तैः बलरामः दृष्टः । तदा कृष्णः दारुकम् अवदत् - ''भवान् अनुक्षणं हस्तिनापुरं गत्वा पाण्डवान् वदतु - 'मुनीनां शाप-कारणतः यादवाः मृताः' इति । एतां वार्तां श्रुत्वा अर्जुनः सत्वरम् आगमिष्यति'' इति ।

अनुक्षणं दारुकः रथम् आरुह्य प्रस्थितवान् । तदा कृष्णः बभ्रुम् अवदत् - ''भवान् स्त्रीणां रक्षणं करोतु । स्वर्णाभरणानां लोभेन चोराः तासाम् अपहरणं कुर्युः'' इति । किन्तु कृष्णे पश्यति सति एव केनचित् व्याधेन प्रयुक्तेन बाणेन बभ्रुः मृतः ।

तदा कृष्णः बलरामम् उद्दिश्य - ''अहं सर्वाः स्त्रियः द्वारकां प्रापय्य प्रत्यागमिष्यामि । तावत् भवान् अत्रैव तिष्ठतु । कुत्रापि मा गच्छतु'' इति उक्तवान् ।

एवम् उक्त्वा कृष्णः स्त्रीभिः सह द्वारकां गतवान् । सर्वासां दायित्वं पितरि निक्षिप्य - ''पितः ! अहम् अस्मिन् नगरे स्थातुं न शक्नोमि । अहं बलरामश्च तपः आचरिष्यावः'' इति उक्त्वा पितरं समाश्वास्य प्रणम्य बलरामसमीपम् आगतवान् ।

बलरामः कस्मिंश्चित् निर्जने प्रदेशे योगसमाधिस्थः आसीत् । कृष्णे पश्यति एव सहस्रफणायुक्तः कश्चन श्वेतः सर्पः बलरामस्य मुखात् बहिः आगत्य समुद्रं प्रविष्टवान् । तस्य सर्पस्य स्वागतार्थं वरुणादयः इतरे सर्पाः अग्रे आगताः ।

अनन्तरं कृष्णः बहुकालं यावत् तत्र तत्र अटन् एकत्र उपविष्टवान् । तावति काले जरनामकः कश्चित् व्याधः मृगयां कुर्वन् तत्र आगतवान् । दूरात् कृष्णं मृगं भावयन् तस्य पादं लक्ष्यीकृत्य बाणं प्रयुक्तवान् । तदा





कृष्णः स्वस्य शरीरस्य त्यागं कृत्वा स्वस्य तेजः पृथिव्याम् आकाशे च व्याप्तं कृत्वा अन्तरिक्षं प्रविष्टवान् । इन्द्रादयः अन्ये समस्तदेवाः आदरपूर्वकं तस्य स्वागतं कृत्वा तं नीतवन्तः ।

कृष्णद्वारा प्रेषितः दारुकः कुरुदेशं प्राप्तवान् । पाण्डवैः मिलित्वा यादववंशस्य विनाशस्य वार्ता श्रावितवान् । एतां वार्ता श्रुत्वा पाण्डवाः दुःखम् अनुभूतवन्तः । अर्जुनः दारुकेण सह द्वारकां गतवान् । तत्र अनाथाः यादवस्त्रियः तेन दृष्टाः । ताः अर्जुनं दृष्ट्वा विलापं कृतवत्यः । तासां स्थितिं द्रष्टुम् अशक्तः अर्जुनः सान्त्वनवचनानि उक्त्वा वसुदेवस्य मेलनार्थं गतवान् ।

वसुदेवः अर्जुनम् आलिङ्ग्य – ''अर्जुन ! असाधारणराक्षसानां मारणे समर्थाः मम पुत्राः इदानीं न सन्ति । किन्तु अहम् इदानीमपि जीवामि । भवतः शिष्यस्य सात्यकेः, प्रद्युम्नस्य च कारणतः यादववंशस्य विनाशः अभवत् । अत्र कोऽपि दोषी नास्ति । सर्वमिदं मुनेः शापस्य फलम् । कृष्णः अपि मम उपेक्षां कृतवान् । कृष्णः माम् उक्त्वा गतवान् अस्ति यत् 'अर्जुनः अत्र आगमिष्यति । तस्य वचनानुसारम् आचरतु' इति'' इति उक्तवान् ।

ततः अर्जुनः दारुकेण सह यादवसभायां मन्त्रिणः उद्दिश्य – ''द्वारकानगरं शीघ्रमेव समुद्रे निमग्नं भवेत् । अतः अहं सर्वान् इतः इन्द्रप्रस्थं नेष्यामि । भवतां समीपे यावत् धनम् अस्ति तावत् एकत्र सङ्गृह्णन्तु । भवतां भविष्यतः राजा वज्रः इन्द्रप्रस्थे भविष्यति । सर्वे यात्रानिमित्तं सज्जतां कुर्वन्तु । विलम्बं मा आचरन्तु'' इति अवदत् ।

परेद्यवि एव वसुदेवः योगसमाधिं प्रविश्य प्राणत्यागं कृतवान् । वसुदेवस्य पत्न्यः देवकी, रोहिणी, भद्रा, मदिरा च सहगमनं कृतवत्यः । वसुदेवस्य प्रियप्रदेशे एव दहनसंस्कारः कृतः । अनन्तरं वज्रादयः वृष्णिकुमाराः, अन्धककुमाराः च जलतर्पणं कृतवन्तः ।

अनन्तरं अर्जुनः यादवानां मृत्युप्रदेशं गत्वा तेषाम् उत्तरक्रियाः निर्वर्तितवान् । सप्तमे दिने अर्जुनः द्वारकातः प्रस्थितवान् । यथा यथा रथाः गजाः पादचारिणः च अग्रे गतवन्तः तथा तथा समुद्रः अपि तान् अनुसरन् द्वारकां मज्जितवान् ।

तत्र तत्र विश्रान्तिं स्वीकृत्य अर्जुनः

पञ्चनदप्रदेशं प्राप्तवान् । असङ्ख्याकाभिः स्त्रीभिः सह एकाकिनम् अर्जुनं दृष्ट्वा चोराः दण्डं गृहीत्वा शिलाखण्डान् क्षिपन्तः आक्रमणं कृतवन्तः । अर्जुनः तान् भायितवान् । किन्तु ते अर्जुनस्य उपेक्षां कृतवन्तः । तदा क्रुद्धः अर्जुनः गाण्डीवम् उन्नेतुम् उद्युक्तः । किन्तु सः गाण्डीवं चालयितुम् असमर्थः अभवत् । सः स्वस्य अस्त्राणि अपि विस्मृतवान् आसीत् । सः चोरान् किमपि कर्तुं न शक्तः । स्वस्य दयनीयां स्थितिं दृष्ट्वा सः लज्जितः अभवत् । अर्जुने पश्यति एव स्त्रीणाम् अपहरणं कृतवन्तः चोराः । अवशिष्टाः स्त्रियः, धनं च स्वीकृत्य अर्जुनः कुरुक्षेत्रं प्राप्तवान् ।

युधिष्ठिरस्य सूचनानुसारं कृतवर्मणः पत्नीं पुत्रान् च मूर्तिकावने, लघुबालान् स्त्रियः वृद्धान् च इन्द्रप्रस्थे, सात्यकेः पुत्रान् सरस्वतीप्रदेशे च स्थापयित्वा 'वज्रः इन्द्रप्रस्थस्य राजा' इति घोषिता अर्जुनेन । अक्रूरस्य पत्न्यः वज्रस्य आश्रये स्थापिताः । कृष्णस्य पत्नीषु रुक्मिणीप्रभृतयः अग्निप्रवेशं कृतवत्यः । सत्यभामादयः तपः आचरितुं वनं गतवत्यः ।

तदा अर्जुनः महर्षेः व्यासस्य आश्रमं गतवान् । अर्जुनं दृष्ट्वा व्यासः अपृच्छत् - "अर्जुन ! भवान् अत्यन्तं दीनः इव दृश्यते । किम् अभवत् ?" इति ।

तदा अर्जुनः - "महात्मन्, अहं कथं वा दुःखी न भवेयम् ? कृष्णबलरामौ दिवङ्गतौ । मुनीनां शापस्य कारणतः सर्वेषां यादवानां विनाशः अभवत् । असाधारणैः अस्त्रैः युद्धकरणे समर्थाः वीराः सर्वे तृणशलाकया युद्धं कृत्वा मृताः । एतया घटनया अहम् आघातं प्राप्तवान् अस्मि । यस्मिन्



लोके कृष्णः नास्ति तत्र कथं जीवनीयम् इति ज्ञातुं न शक्यते मया । ततोऽपि भयङ्करी काचित् घटना जाता अस्ति । आकस्मिकरूपेण मम पराक्रमः नष्टः अभवत् । चोराः यादवस्त्रीणाम् अपहरणं कुर्वन्तः आसन् । किन्तु अहं तान् अवरोद्धुं न शक्तवान् । अतः मम मनः व्याकुलम् अशान्तं च अस्ति । अहम् उन्मत्तः इव अटन् अस्मि । किं करवाणि अहम् ?'' इति अवदत् ।

तदा व्यासः - ''अर्जुन ! वृष्णिः अन्धकः च शापकारणतः मृतौ । तयोः विषये चिन्तां न करोतु । कृष्णः सर्वम् अवरोद्धुं समर्थः आसीत् । किन्तु सः उद्देशपूर्वकं मौनम् आश्रितवान् । शाप-निवारणं कर्तुं किं तेन शक्यं न आसीत् ? कृष्णस्य अवतारकार्यं समाप्तम् अस्ति । अतः सः स्वस्थानं प्रति गतवान् अस्ति ।

भवता भीमनकुलसहदेवैः च अनेकानि महन्ति कार्याणि कृतानि सन्ति । मम विश्वासः अस्ति यत् भवन्तः कृतार्थाः अभवन् इति । भवन्तः अपि शीघ्रम् उत्तमां गतिं प्राप्स्यन्ति । कालः स्वयं परिवर्तमानः इतरान् अपि परिवर्तयति । एषः प्रपञ्चः एव कालाधीनः अस्ति । कदाचित् कालः एव अस्मान् शास्ति, चालयति च । भवतः अस्त्राणां कार्यं समाप्तम् अस्ति । अतः तानि निर्गतानि सन्ति । एषः कालस्य प्रभावः । अतः भवान् चिन्तां न करोतु'' इति वदन् अर्जुनस्य सान्त्वनं कृतवान् ।

अर्जुनः हस्तिनापुरम् आगत्य प्रवृत्तं सर्वं युधिष्ठिरं निवेदितवान् ।

सर्वं श्रुत्वा युधिष्ठिरस्य मनसि महाप्रस्थानस्य विचारः उत्पन्नः । सः अर्जुनम् अवदत् - ''भ्रातः ! समयः सर्वान् प्राणिनः बन्धयित्वा स्थापयति'' इति ।

अनन्तरं सर्वेषां पाण्डवानां मनसि 'राज्यत्यागं कृत्वा महाप्रस्थानं करणीयम्' इति विचारः प्रविष्टः । युधिष्ठिरः युयुत्सुम् आहूय तस्मै शासनाधिकारं समर्पितवान् ।

स्वस्य राज्यस्य उत्तराधिकारिरूपेण परीक्षितः, इन्द्रप्रस्थस्य उत्तराधिकारिरूपेण वज्रस्य च चयनं तेन कृतम् । द्वयोः राज्ययोः पर्यवेक्षणं सुभद्रया करणीयम् इति निश्चितम् । ततः युधिष्ठिरः द्वारकायां मृतानां सर्वेषां निमित्तं श्राद्धकर्माणि आचरितवान् ।





चन्दमामाप्रस्तुतिः
5
अजेयः गरुडः
कला - पाणिः
चन्द्रपुर्याः राजा मुख्यमन्त्रिणः पुत्रम् आदित्यम् आहूतवान् । आदित्यः लुण्ठाकान् गृहीतवान् । आदित्यः
लिखितम् एकं पुस्तकं प्राप्तवान् । तत्र लिखितम् आसीत् - 'गरुडः यथा मातरं अन्यमुक्तां कृतवान् तथा भवान्
स्वमातृभूमेः रक्षणार्थं कार्यं कुर्यात्' इति । राजकुमारस्य रवीन्द्रदेवस्य विमोचनार्थं सेनापतिः
सर्वान् बन्दिनः मोचितवान् । तेषु अन्यतमः रामसिंहः आदित्यं तदीयपितुः
मरणं कथं जातम् इति उक्तवान् । नरेन्द्रदेवे आदित्यस्य
सन्देहदृष्टिः पतिता ।




स्वनाम्नः आह्वानं श्रुत्वा रामसिंहः परिवृत्य दृष्टवान् । तत्र एकं मन्दहासयुक्तं मुखं दृष्टं तेन ।




किं भवता अहम् अभिज्ञातः ? अहम् अस्मि आदित्यः ।




आदित्यवर्य ! भवान् एव अस्मान् रक्षितवान् । भवतः मुखं वस्त्रेण आवृतम् आसीत् ।




रामसिंह, अहं सदा भवतः सहायः एव । माम् आत्मीयं भावयतु भवान् ।


रामसिंहः स्वस्य अनुचरान् आहूतु यदा ततः गतः तदा आदित्यः स्वमुखं पुनरपि वस्त्रेण आवृतवान् ।


आदित्यः रामसिंहस्य तदनुयायिनां च आगमनं प्रतीक्षमाणः स्थितवान् ।


अस्माकं लक्ष्यम् अस्ति सेनापतेः ग्रहणम् । यथा मया आदिश्यते तथैव करणीयं सर्वैः मि । स्वयं निर्णयः मास्तु ।


नरेन्द्रदेवः यथापूर्वं स्व-कुतन्त्रान् अनुवर्तितवान् ।
रवीन्द्र-देवः तेन वेषान्तर-धारिणा मिलितः न स्यात् ।


अन्यथा सः तं समापितवान् स्यात् । महाराज, रवीन्द्रविषये जागरूकता वरम् ।


यदि अहं तं ग्रहीतुं शक्नुयां तर्हि ध्वजस्तम्भे लम्बयेयम् ।
राजस्थाने...


एतत् तु अविचिन्तितं वचनम् । यदि सामर्थ्यं स्यात् तर्हि सः उपायेन गृह्यताम् ।


रवीन्द्रदेवः सैनिकानां गणेन सह ततः प्रस्थितवान् ।


अनन्तरदिने मुख्यरक्षकः राजसमीपं गच्छति ।
महाराज, रवीन्द्रदेवः महत्या सेनया सह इदानीम् एव आगच्छन् अस्ति । सेना राज-भवनं प्रविशन्ती अस्ति ।
कुत्र सेना ? पश्यामि तावत् ।


राजा चन्द्रशालायां स्थित्वा महतीं सेनां पश्यति । सेनावाहकं शकटं गर्दभाः कर्षन्तः आसन् ।
अहो, रवीन्द्रदेवस्य कीदृशी बुद्धिमत्ता !


आं महाराज, स तु भवतः पुत्रः खलु ?


तावता तत्र आदित्यः उपस्थितः ।
महाराज ! एते ते एव सैनिकाः, ये च रवीन्द्रदेवेन सह गताः आसन् ।


रवीन्द्रः कुत्र ?




अनन्तरदिने राज्ञा, नरेन्द्रदेवेन च श्रुतं यत् ध्वजस्तम्भे कोऽपि बद्धः अस्ति इति । अतः तौ भवनात् बहिः आगतौ । ध्वजस्तम्भसमीपे जनाः सम्मिलिताः आसन् । जनाः बद्धमुखं रवीन्द्रदेवं स्तम्भात् अवतारयन्तः आसन् । बन्धनार्थम् उपयुक्तायां वस्त्र-पट्टिकायां लिखितम् आसीत् - 'गरुडः' इति ।


ये आत्म-प्रशंसां कुर्वन्ति तान् जागरूकताः स्मारयति एषा घटना ।


सर्वथा अपमानकरम् एतत् । सः कः इति अस्माभिः शीघ्रातिशीघ्रं ज्ञातव्यं, सः दण्डनीयः च ।


राज्ञः कोपः अपि प्रवृद्धः ।
नरेन्द्र, गरुडम् आतङ्कवादिनं घोषयतु ।
यः तं सजीवं ग्रहीष्यति तस्मै पुरस्कारः दास्यते इति उद्घोषणं कारयतु ।


सेनापतिः मुख्याधिकारिणः आज्ञापितवान् यत् गरुडस्य ग्रहणार्थं समीचीनां योजनां कुर्वन्तु इति ।
त्वर्यताम् । समयः न व्यर्थीक्रियताम् ।


ते देशस्य मानचित्रं दृष्ट्वा स्थलं निश्चित्य एकैकम् एकैकत्र नियोजितवन्तः गरुडस्य अन्वेषणार्थम् ।
भवन्तः गरुडं कथं गृहीयुः इत्यत्र न मे आस्था । सर्वत्र भटान् प्रेषयन्तु । कथमपि गृह्णन्तु तम् । स्वसामर्थ्यं निरूपणीयं तस्य ग्रहणेन एव ।
- (अनुवर्तते)

# स्वर्गं प्रति, उत नरकं प्रति?

रामन्दिरे महापण्डितस्य कस्यचित् प्रवचनं प्रचलति स्म । पापपुण्ययोः स्वर्गनरकयोः च विषये सः वदन् आसीत् ।

''मोक्षप्राप्तिः सर्वेषां लक्ष्यं स्यात् । इहलोके पुण्यं कुर्वन् यः पारिवारिकसुखादिषु संलग्नः न भवति सः स्वर्गं प्राप्स्यति । किन्तु अयं मार्गः न सुगमः । एतदर्थम् आदौ स्वस्य इच्छाः निग्रहणीयाः । भगवति दृष्टिः निधातव्या । एवं पुण्यं सम्पाद्य ये भगवतः सान्निध्यं प्राप्तुम् इच्छन्ति ते हस्तम् उन्नयन्तु'' इति उपस्थितान् भक्तान् उक्तवान् पण्डितः ।

तदा सर्वे हस्तम् उन्नीतवन्तः, ऋते एकस्मात् वृद्धात् । सः वृद्धः तु निश्चिन्ततया उपविष्टः आसीत् ।

तदा पण्डितः कठोरस्वरेण - ''इच्छानां दासत्वप्राप्तिः न क्लेशाय । यः शारीरकसुखे आसक्तः सन् भगवतः स्मरणं न करोति सः नरकं गमिष्यति । नरके यमकिङ्कराः तं बहुधा पीडयिष्यन्ति । किं भवत्सु कोऽपि नरकं गच्छति? न । सर्वथा न । तथापि वदामि । भवत्सु कोऽपि यदि नरकं गन्तुम् इच्छति तर्हि सः हस्तम् उन्नयतु'' इति अवदत् ।

तदा कोऽपि हस्तं न उन्नीतवान् । पण्डितः नेत्रे रक्तीकृत्य तं वृद्धम् अपृच्छत् - ''भोः महाशय ! 'स्वर्गं गन्तुम् इच्छन्तः हस्तम् उन्नयन्तु' इति यदा मया उक्तं तदा भवता हस्तः न उन्नीतः । 'नरकं गन्तुम् इच्छन्तः हस्तम् उन्नयन्तु' इति यदा उक्तं तदा अपि भवता हस्तः न उन्नीतः । एवं तर्हि भवान् कुत्र गन्तुम् इच्छति?'' इति ।

तदा वृद्धः शान्तस्वरेण अवदत् - ''पण्डितवर्य ! अहं कुत्रापि गन्तुं न इच्छामि । मम पौत्राः अल्पवयस्काः शिशवः । तैः सह वासः, तेषां वचनस्य श्रवणं च परमानन्ददायकम् । मम गृहे श्वेता धेनुः गर्भिणी अस्ति । मम पत्नी वदति यत् सा पुत्रम् एव प्रसूते इति । सः मया द्रष्टव्यः । अतः अहं गृहम् एव गन्तुम् इच्छामि, न तु अन्यत्र कुत्रापि'' इति ।





# त्रिखण्डात्मकः मन्त्रः

सीतापुरात् किञ्चिद्दूरे एकं वनम् आसीत् । तत्र कश्चन वामनः पिशाचः निवसति स्म । तस्य विषये घृणां प्राप्य इतरे पिशाचाः - ''भवान् वामनः । भवतः रूपं जुगुप्सा-वहम् । अस्मादृशानां सुन्दर-पिशाचानां मध्ये भवान् स्थातुम् अयोग्यः'' इति वदन्तः ततः उच्चाटितवन्तः ।

कदाचित् अर्धरात्रे तस्मात् अपि कुरूपः वामनः कश्चन पिशाचः तत्र आगतवान् । सः वामनं पिशाचं दृष्ट्वा तस्य पार्श्वे उपविशन् महता आनन्देन - ''भवान् अपि मादृशः एव । अतः आवां मिलित्वा वसाव । मम नाम रक्ताक्षः । भवतः नाम किम् ?'' इति अपृच्छत् ।

नूतनं मित्रं प्राप्य नितरां सन्तुष्टः वामनः पिशाचः - ''मम नाम वक्रदन्तः इति । आवाम् उभौ अपि समानव्यसनिनौ । अतः भवान् अपि अस्मिन् एव वृक्षे मया सह निवसतु'' इति अवदत् ।

तदारभ्य उभौ अपि पिशाचौ मिलित्वा वासम् आरब्धवन्तौ । तौ उभौ अपि मार्गे गन्तॄणाम् उपहासं कुर्वन्तौ तान् विविधरीत्या पीडयतः स्म ।

एकदा सायङ्काले षट् शकटाः तेन मार्गेण गच्छन्तः आसन् । ते शकटाः सुन्दरतया अलङ्कृताः आसन् । शकटचालकाः हसन्तः उच्चैः सम्भाषमाणाः आसन् । शकटे बह्व्यः महिलाः उपविष्टवत्यः आसन् । ताः सर्वाः अपि आभूषणैः अलङ्कृताः । सर्वाः अपि कौशेयशाटिका-धारिण्यः एव । रक्ताक्षवक्रदन्तौ ज्ञातवन्तौ यत् एते सर्वे विवाहार्थं गच्छन्तः सन्ति इति ।

वक्रदन्तः अवदत् - '' आवाम् अपि तैः सह विवाहार्थं गच्छाव । तत्र कुचेष्टां कृत्वा कोलाहलम् उत्पादयाव'' इति ।

''समीचीनम् । भवान् तु मम मनोगतम् एव अवदत् । अवश्यं तत्र गच्छाव'' इति वदन् स्वस्य अङ्गीकारं सूचितवान् रक्ताक्षः ।



अनन्तरं उभौ अपि शकटान् अनुसरन्तौ विवाहस्थलं प्राप्तवन्तौ । तत्र कस्यचित् प्रकोष्ठस्य अट्टे निलीय स्थितवन्तौ । तत्र मञ्चाः, पात्राणि, इतरवस्तूनि च आसन् ।

रक्ताक्षः अवदत् - ''अत्र स्थित्वा एव आवां काञ्चित् कुचेष्टां करवाव । जनाः आवां द्रष्टुं न शक्नुवन्ति इत्यतः किं प्रचलति इति अजानन्तः आश्चर्यचकिताः भवेयुः । ततः आवयोः मनोरञ्जनं भविष्यति'' इति ।

''सम्यक् उक्तं भवता । नूतना क्रीडा एषा'' इति वदन् वक्रदन्तः स्वस्य सम्मतिं दर्शितवान् ।

''पूर्वम् अहं धर्मपुरस्य समीपे कस्मिंश्चित् वृक्षे वसामि स्म । प्रतिदिनम् अर्धरात्रे कश्चन वृद्धः पिशाचः तत्र आगच्छति स्म । सः नेत्रे निमील्य सदा कमपि मन्त्रं जपति स्म । एकदा रात्रौ अहं - 'माम् अपि कञ्चित् मन्त्रं पाठयतु' इति तं सानुरोधम् उक्तवान् । तदा वृद्धः पिशाचः मां त्रिखण्डात्मकं मन्त्रं पाठितवान्'' इति अवदत् रक्ताक्षः ।

तदा वक्रदन्तः - ''एतेषाम् उपरि तस्य मन्त्रस्य प्रयोगं किं करवाव ?'' इति महता औत्सुक्येन अपृच्छत् ।

तदा रक्ताक्षः - ''अवश्यं करवाव । यदा अहं मन्त्रं वदामि तदा भवान् 'अस्तु' इति वदतु । अनन्तरं पश्यतु - किं भविष्यति इति'' इति अवदत् ।

तावति काले भोजनं समाप्य वधूः, तस्याः मातापितरौ च प्रकोष्ठं प्रविष्टवन्तः । वधूः तत्र विद्यमानायाः पेटिकातः एकां कौशेयशाटिकां निष्कास्य पित्रे प्रदर्शयन्ती - ''मुहूर्तसमये माता एतां शाटिकां धरिष्यति । सम्यक् अस्ति खलु ?'' इति पृष्टवती ।

तदा तस्याः पिता - ''शाटिका सुन्दरी एव । किन्तु एतस्याः मूल्यं किम् ?'' इति अपृच्छत् ।

वधूः अवदत् - ''सहस्रं रूप्यकाणि ।''

तदा पिता क्रोधेन पत्नीं पश्यन् - ''एतावत् मूल्यम् !! भवत्याः बुद्धिः अस्ति किम् ? हन्त ! कीदृशी महिला भवती !! उदरे दाहः भवतु भवत्याः'' इति अवदत् ।

अट्टे उपविष्टः रक्ताक्षः अनुक्षणं त्रिखण्डात्मकं मन्त्रं पठितवान् । वक्रदन्तः 'अस्तु' इति उक्तवान् ।

अनुक्षणं वध्वाः माता उदरं स्पृष्ट्वा क्रन्दनम् आरब्धवती - ''न जाने, भवतः मुखे कीदृशः शनिः उपविष्टवान् अस्ति

इति । मम उदरे दाहः भवन् अस्ति । भवतः मुखस्य नाशः भवतु'' इति अवदत् ।

तस्याः कथनस्य समाप्तेः समनन्तरमेव रक्ताक्षः मन्त्रपठनम् आरब्धवान् । वक्रदन्तः 'अस्तु' इति अवदत् ।

स्वस्य प्रोञ्छेन मुखं मार्जयन् वध्वाः पिता पुत्रीम् उद्दिश्य - ''भवत्याः माता पिशाचानां मन्त्रं जानाति इति भाति । मम मुखं मरीचिकाचूर्णेन लिप्तम् इव अस्ति'' इति उक्त्वा ततः धावनं कृतवान् ।

तदा वरः वधूं द्रष्टुं मित्रैः सह तत्र आगतवान् । वध्वाः सौन्दर्यम् अवलोकमानः आसीत् सः । पार्श्वे स्थितं तस्य मित्रं वरस्य भुजं कम्पयन् अवदत् - ''आनन्द ! किम् अभवत् भोः ? किमर्थम् एवं स्थितवान् भवान् ? भवतः पादौ भूमौ संलग्नौ इति भाति'' इति । अनुक्षणं रक्ताक्षः मन्त्रपठनम् अकरोत् । वक्रदन्तः 'अस्तु' इति अवदत् । वरस्य पादौ भूमौ संलग्नौ जातौ । बहुधा प्रयतमानः अपि सः स्वस्य पादौ कम्पयितुं न शक्तः ।

जनाः वध्वाः प्रकोष्ठे प्रवृत्ताः घटनाः ज्ञात्वा आश्चर्यचकिताः अभवन् । समूहरूपेण आगत्य स्थितवन्तः ते । तावता वध्वाः पितामही प्रवृत्तं श्रुत्वा तत्र आगत्य - ''कोऽपि मम पौत्र्याः विषये मन्त्रप्रयोगं कुर्वन् अस्ति इति भाति । किञ्चित् लवणं शुष्काः मरीचिकाः च आनयन्तु'' इति उच्चस्वरेण उक्तवती ।

तत्र स्थितवत्सु कश्चन बन्धुः गत्वा लवणं मरीचिकाः च आनीतवान् । पितामही तानि प्रकोष्ठे सर्वत्र विकिरन्ती - ''चेष्टालवः ये पिशाचाः अस्मिन् प्रकोष्ठे निलीय स्थितवन्तः सन्ति ते गर्दभाः भूत्वा इतः धावन्तु'' इति उक्तवती । एतत् श्रुत्वा आनन्दम् अनुभवन् अविवेकी रक्ताक्षः मन्त्रं पठितवान् । वक्रदन्तः अपि अविचिन्त्य 'अस्तु' इति उक्तवान् । अनुक्षणं द्वौ अपि पिशाचौ गर्दभौ भूत्वा ततः धावितवन्तौ ।

तयोः गमनसमनन्तरम् एव स्थितिः यथावत् जाता । वरः पादौ कम्पयितुं शक्तः । निश्चिते मुहूर्ते विवाहः सम्पन्नः ।






# चित्रशीर्षिकास्पर्धा





उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां
किं भवन्तः प्रेषयितुं शक्नुयुः ?

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -
**चन्दमामा** (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू. १००/- पुरस्काररूपेण दास्यन्ते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

'जून्'मासीयस्पर्धाशीर्षिकाप्रेषकः -
**अशोक. द. दातार**
7 ब, परमसुखसहनिवासः
गावडपथ, नौपाडा
ठाणे - ४०० ६०२

### पुरस्कृतशीर्षिका





छाया न किञ्चित्, न पर्णं, न पुष्पम्
न चित्रं, तथापि गेहं तु सिद्धम्

**चन्दमामायाः वार्षिक ग्राहकशुल्कं -**

भारते रू. १२०.००
Payment in favour of CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

